To

Kulapati

HIS EXCELLENCY

**Dr. K. M. Munshi**

*Governor, Uttar Pradesh*

with

reverence and gratitude

CONTENTS

# BIBLIOGRAPHY

**List of books and papers concerning Kaumudimahotsava.**

Dasaratha Sarma, Kaumudimahotsava and the date of Kalidasa (From the Indian Historical Quarterly, Vol. X, No. 1, 1934).

Jayaswal, K. P., Historical Data in the Drama of *Kaumudimahotsava*.

Dasaratha Sarma, Chandasena of *Kaumudimahotsava* (From the Journal of the Bihar and Orissa Research Society Vol. XXI. 1935, Part I).

Dasaratha Sarma, The So-called City Council of Pataliputra (From the Indian Historical Quarterly, Vol. XI, 1935).

Dasaratha Sarma M.A., Professor Winternitz on the *Kaumudimahotsava*.

(From the Journal of the Bihar and Orissa Research Society Vol. XXII, 1936, Part III).

1929 Kaumudimahotsava edited text by Mr. Ramakrishna Kavi

1938 Journal of the Andhra Historical Research Society, pp. 63 ff.

Mudrarakshasa.
Dramas of Kalidasa.
Kathasaritsagara.
Epigraphica Indcia Vols. VI, XVIII, XIX.
Baudhayana Dharma Sastra.
Sarangadharapaddhati.
Journal of the Bihar and Orissa Research Society XXII & XIX.
History of Inscriptions of Northern India.
The Indian Antiquary Vol. IX.
Arthasastra.
Dandakaranya by Dr. D. R. Bhandarkar—Jha Memorial Volume.
Imperial Gazetteer of India Vol. XVII.
Devibhagavata VII.
Sivapuranam.
Sewels Arch. Survey of South India.
Architecture of Dharwar and Mysore—Meadows Taylor.
Secred Books of the East XLV.
The Ancient Geography of India—Cunninghan.
Raghuvamsam.

# ABBREVIATIONS

| | | |
|---|---|---|
| J A H R S | .. | .. Journal of the Andhra Historical Research Society. |
| E. I. | .. .. | .. Epigraphica Indica. |
| Dh. S. | .. .. | .. Dharma Sastra |
| J. B. O. R. S. | .. | .. Journal of Bihar Oriental Research Society |
| The Ind. Ant. | .. | .. The Indian Antiquary. |
| J. A. S. B. | .. | .. Journal of the RoyalAsiaticSociety, Bengal. |
| J. R. A. S. | .. | .. Journal of the Royal Asiatic Society |

॥ श्रीः ॥

# कौमुदीमहोत्सवः ।

(1) ## प्रथमोऽङ्कः ।

(2) (नान्द्यन्ते ततः प्रविशति सूत्रधारः)

(3) सूत्र—श्रीमद्वैयाघ्रचर्मास्तरखचिततले स्थण्डिले संनिषण्णः
कृत्वा पर्यङ्कबन्धं फणमणिकिरणच्चारिणा तक्षकेण ।
नानात्वग्रन्थिमैत्रीं धियमिव विकिरन् दन्तकान्तिच्छलेन
ब्रह्मव्याख्याननिष्ठस्तव भवतु तमःकृत्तये कृत्तिवासाः ॥१॥

(4) (परिक्रम्य) अये ! अयं समुपस्थितः सर्वजनसामान्यमहोत्सव-
भूतः शरत्समयसमवतारः । तथा हि—

(5) हंसः सैकतमुत्सुकेन मनसा प्रत्यागतः प्रेक्षते
भृङ्गो मङ्गलपाठकः सरसिजं प्रामोदयं सेवते ।
रिक्तोऽपि ध्वनिपूरितत्रिभुवनं कृत्वा वदान्यप्रथां
पश्चादेति शनैः शनैः परिणतो मेघः परामुन्नतिम् ॥२॥

(6) अपि च,

(7) कृष्णाशारां कटाक्षेण कृषीवलकिशोरिका ।

करोत्येषा कराग्रेण कर्णे कलममञ्जरीम् ॥ ३ ॥

(8) तदानीं तत्रभवतः पाटलिपुत्राधिपतेः सुगृहीतनाम्नो देवस्य कल्याणवर्मणः प्रतिनवराज्यलाभसंवर्द्धितहृष्टिवृद्धिपरसंकुलेऽपि राजकुले पुनरयमपरः प्रत्यासीदति कौमुदीमहोत्सवारम्भः. तदहमपि स्वकुलोचितेन सङ्गीतकसेवाधिकारेण लब्धावसरो राजकुलं प्रविशामि । (प्रविश्य) प्रयुक्तपूर्वेषु पूर्वसूरिसूक्तिविशेषेषु का पुनरभिनवरमणीया कृतिरभिनेतव्या । भवतु, यत्तदस्यैव राज्ञः समतीतं चरितमधिकृत्य (विज्जि) कया निबद्धं नाटकम् । तदिदानीमग्रतः कृत्वा मगधराजान्तःपुरमवतरामि । तत्र मे सन्तः सहायाः—

(9) विरसापि कृतिः प्रपत्स्यते
मधुनिष्यन्दमयं दशान्तरम् ।
यदि नाम सतामनुग्रहः
शिशिरः प्राप्य रवेरिवातपम् ॥ ४ ॥

(10) (विलोक्य ससम्भ्रमम्)

(11) तपसेव विभक्तविग्रहं
किमिदं धाम गृहीतवल्कलम् ।
पुनरुक्तमिवोपलक्ष्यते
वटुवेषग्रहणं विभावसोः ॥ ५ ॥

(12) हन्त ! विज्ञातम्, अस्मत्पक्षपातात् स्वयमेव पारिपार्श्वको

मुनिशिष्यभूमिकामादाय इत एवाभिवर्तते । तदहमप्यनन्तरोचितेषु करणीयेषु व्याप्रिये । (निष्क्रान्तः)

(13) स्थापना ।

(14) (ततः प्रविशति मुनिशिष्यः)

(15) मु—अहो तु खलु कुलपतेराश्रमपदस्य महती सम्भावना । यतस्तदा विद्याविनीते गुरुजनानुज्ञाते समं सवयोभिः स्वकुलोचिते कर्मण्यधिकर्तुं प्रस्थिते कुमारे—

(16) पुष्पं बाष्पजलोपमं क्षितितले मुक्तं मुहुः पादपै-
र्यावद्दृष्टिपथं तपोवनमृगैरुद्ग्रीवमुद्वीक्षितम् ।
चिन्ताशून्यधियो निमीलितदृशः सास्राः क्षणं तापसाः
शङ्के शोककलङ्किताः कुलपतेः कण्ठे गिरः कुण्ठिताः ॥६॥

(17) अथ वा सर्वमिदं कुमारमुद्दिश्येति नात्र विस्मयनीयं पश्यामि । कुतः—

(18) श्रीवृत्साङ्कमुरःस्थलं हरवृषप्रस्थानखेलं गतं
पादावङ्कुशकेतुलाञ्छिततलावाजानुलम्बौ भुजौ ।
प्राप्तं चारु मुखं ललामरचनामुन्मेषिणीमूर्णया
पर्याप्तं गुणसम्पदां नृपसुतः सङ्केतगोष्ठीगृहम् ॥७॥

(19) (परिक्रम्य) अये! अयं काश्यपायनः । (आकाशे) किमाह

भवान्—कौत्स, कुतो भवानागच्छति ?—इति। कुलपतिनिदेशादमितश्चण्डिकायतनं पम्पासरः समीपवर्तिनि कुलक्रमागतस्य सख्युः कुञ्जरकस्य परिग्रहभूते व्याधकिष्किन्धनाम्नि दुर्गस्थाने प्रतापावसरप्रतीक्षया प्रच्छन्नोषितं कुमारं कल्याणवर्माणं सुखमहर्विहारं पृष्ट्वा प्रतिनिवृत्तोऽस्मि । किमाह भवान्—कथमितः प्रथिततरमेव वैरिवर्गाधिष्ठितराज्यप्रत्यानयनोपायचिन्तकः पाटलिपुत्रं गतो नाद्यापि प्रतापावसरमापादितवान् मन्त्रगुप्त ?—इति । ननु प्रमाद भीरुत्वाद्विवेकिनां कालक्षेपवत्यः कार्यसिद्धयः । किमाह भवान्— कथं च कुलपतिरेव जाबालिस्तपःप्रभावेन तां सिद्धिं नाभ्यर्थितः कुमारेण ?—इति पराक्रमोपनतामेव सिद्धिमभिकाङ्क्षते क्षात्रं तेजः । किं ब्रवीषि—एवमेतत्, गच्छतु भवान्, अहमपि समित्कुशकुसुमान्युपहरामि ?—इति साधयतु भवान्, अहमपि कुलपतिं द्रक्ष्यामि ।

(20) (इति निष्क्रान्तः)

(21) विष्कम्भकः

(22) (ततः प्रविशति कुमारः)

(23) कुमा०—येषामाख्या सहायान् गणयति गणनां नैकयाप्यङ्गुलीन
तेषां तोयप्रदानं परिहरति रणस्वर्गिणां पूर्वजानाम् ।
तेषां सुप्तेव कीर्तिः प्रतिवसति यथा स्वेगृहे सालभञ्जी
येषां शेषामिवाज्ञां शिरसि नृपतयः श्रद्धाना वहन्ति ॥८॥

(24) तावदस्य तपनीयाशोकतरोरधश्छायायामुपविशामि यावत् कुञ्जरकसकाशात् प्रतिनिवर्तते वयस्यवैखानसः। (तथा कृत्वा) अहो प्रवान्तशीतलेयं तरुतलच्छाया।

(25) सम्प्रत्यहं भृङ्गकुलानुयातै-
गृहीतगन्धद्विपदानगन्धैः।
विन्ध्यानिलैः शैशवभुक्तमुक्तं
प्रबोधितः पाटलिपुत्रवासम् ॥९॥

(26) (निःश्वस्य) तामेव शैशवकथामनुस्मरामि। तदा हि—

(27) सन्नद्धः कवची शरासनधरस्तातो रुषा प्रोषितो
जाता धौतकपोलपत्रलतिका बाष्पाम्बुभिर्मातरः।
एकाकी चलकाकपक्षविभवो नीतोऽस्म्यहं तापसै-
मिथ्येव प्रतिभाति शैशवकथा स्वप्नो नु माया नु मे ॥१०॥

(28) अथ वा कृतमनया कातरजनोचितया निपातोदन्तचिन्तया। तेजस्विनो हि पुरुषस्य सम्पदुद्योतनप्रतिपक्षभूता विपदपि न च्छायेव परिहरति पार्श्वम्, न पुनरुदाराः परिहीयन्ते। कुतः—

(29) ध्वस्तः सुन्दरपाटलो निपतितः कात्यायनः शङ्कितः
प्राप्तं भैरवमन्धकारगहनं प्रद्योतकारागृहम्।

तेजोराशिरवाप्तवानुदयनस्तैस्तैरुपायक्रमैः
कौशाम्बीं च सुयामुनं च विजयी भूयोऽपि वत्सेश्वरः ॥११॥

(30) भोः पाटलिपुत्रगतमन्त्रगुप्तदूतप्रतिप्रेषणावधिकमपि काललेशमत्रैव तिष्ठन्नप्रतिप्रसरवन्ध्यममर्षं धारयितुं न शक्नोमि। (निमित्तं सूचयित्वा) किं नु खलु स्फुरति दक्षिणो मे बाहुः !

(31) स्वजने शोकमन्तप्ते प्राप्तैश्वर्येष्वरातिषु ।
नाद्यापि धनुरादत्ते बाहुर्वामेतरो मम ॥१२॥

(32) (शब्दं रूपयित्वा) को नु खल्वेष कमलमधुपानमत्तकलहंसनिर्भरो निनादः श्रूयते ? अथवा नेदं कलहंसविरुतम्। कुतः—

(33) काञ्चीकलरवोन्मिश्रं पादक्रमविलम्बितम् ।
मञ्जुवाचामिदं मन्ये मञ्जु मञ्जीरशिञ्जितम् ॥१३॥

(34) भवतु, शब्दानुसारेण चक्षुर्विक्षिपामि । (तथा कृत्वा) अये ! पल्लवितमिव जीवलोकं पश्यामि । का नु खल्वेषा परिमितपरिचारा तारागणपरिवृता शशाङ्कलेखेव लक्ष्यते कुमारी ?

(35) वामोरूमूरुजातां विदुरुरुजघनामुर्वशीं विश्वयोनेः
सीतां सीताप्रसूतिं श्रियमपि मथितादम्बुराशेरुशन्ति ।
न त्वस्या जन्म जाने जननयनमधुस्यन्दिनी कान्तिलक्ष्मी-
र्मध्येवेदिप्रसूतां द्रुपददुहितरं वेदिमध्यां वदन्ति ॥१४॥

(36) ( ततः प्रविशति ससखीगणा कीर्तिमती काञ्चुकीयश्च )

(37) का—इत इतो भवती ।

(38) की—हला णिउणिए, किं णु खु पसण्णं विअ मे हिअअं ?
( हला निपुणिके, किं नु खलु प्रसन्नमिव मे हृदयम् ? )

(39) नि—भट्टिदारिए, भअवदीएभत्तजणाणुकंपिणीए पाद-वंदणं करिअ णिग्गदासि, कीस ण पसण्णं होइ दे हिअअं ?

( भर्तृदारिके, भगवत्या भक्तजनानुकम्पिन्याः पादवन्दनं कृत्वा निर्गतासि, कथं न प्रसन्नं भवति ते हृदयम् ? )

(40) की—जुत्तं तुए भणिदं, सोढव्ववेदणं दाणिं मे तादस्स अंबाए अ विओअदुक्खं भअवदीदंसणेण ।

( युक्तं त्वया भणितम्, सोढव्यवेदनमिदानीं मे तातस्याम्बायाश्च वियोगदुःखं भगवतीदर्शनेन ).

(41) नि—अइरादो पसादं वि दंसइस्सदि भअवदी ।
( अचिरात् प्रसादमपि दर्शयिष्यति भगवती ).

(42) कु—सर्वथा मकरकेतुमन्तरेण नास्याः समुत्पत्तिं पश्यामि ।
तथा हि—

(43) सर्गान्तराणि सकलान्यतिवर्तमान-

मस्या वपुर्न खलु शिल्पफलं विधातुः ।
शङ्के इषाङ्कविजयाय मनोभवेन
तप्तस्य सोऽयमनवरतपसो विपाकः ॥ १५ ॥

(44) की०—कोकिलकंठराअकोमलगीदिसद्दो चडुलदाआणिवहो कंचणणिम्मिदो किं एस पासादो ?
कोकिलकण्ठरागकोमलगीतिशब्दः चटुलपताकानिवहः काञ्चननिर्मितः किमेष प्रासादः ?

(45) नि—भट्टिदारिए, णत्थि एत्थ पासादो, एसो खु कुसुममंजरीपुंजपिंजरिअसाहासहस्सो मंदपवणंदोलिअपल्लवपुडो महुअरमहुरुल्लावमणोहरो असोअरुक्खो। एदिणा पच्चादिट्ठा दाणि पमअवणपावपाणं समिद्धी। ( भर्तृदारिके, नास्त्यत्र प्रासादः, एष खलु कुसुममञ्जरीपुञ्जपिञ्जरितशाखासहस्रो मन्दपवनान्दोलितपल्लवपुटो मधुकरमधुरोल्लापमनोहरोऽशोकवृक्षः । एतेन प्रत्यादिष्टो इदानीं प्रमदवनपादपानां समृद्धिः ).

(46) की—हंजे, अत्थि किं इमस्स सुहसीदलं तलच्छाआमण्डलं ? ( हंजे, अस्ति किमेतस्य सुखशीतलं तलच्छायामण्डलम् ?

(47) नि—को एत्थ संदेहो ? ( कोऽत्र सन्देहः ? )

(48) की—कहं तुवं दूरगदा जाणिस्ससि ? (कथं त्वं दूरगता जानासि ?)

(49) नि---आकिदिप्पच्चएण भणामि। जइ अत्थि तदो किं ?
( आकृतिप्रत्ययेन भणामि। यद्यस्ति ततः किम् ? )

(50) की—उंमत्तिए, परिस्संतो जणो विस्समं लभेदि।
( उन्मत्ते, परिश्रान्तो जनो विश्रमं लभते ).

(51) नि---अंग्र, परिस्संता भट्टिदारिआ। ( आर्य, परिश्रान्ता भर्तृदारिका).

(52) का—भोः परिश्रान्ता सिद्धायतनेषु वाहनारोहणातिक्रमः परिहरणीय इति पादचारप्रवृत्ता भर्तृदुहिता। देवि, मुहूर्तमस्य तपनीयाशोकतरोरधश्छायायामुपविशाम, स्वयमेवोपकल्पितमावासस्थानमन्तः पुराधिकृतः सिंहलको निवेदयिष्यति।

(53) ( सर्वे परिक्रामन्ति )

(54) कु—संप्रति चरितार्थं चक्षुः—

(55) पादौ पल्लवकोमलौ करिकरश्रीचोरमूरुद्वयं
विस्तीर्णं जघनस्थलं तनुतरो मध्यः स्तनावुन्नतौ।
बाहू चम्पकपुष्पदामरुचिरौ पूर्णेन्दुकल्पं मुखं
केशाः कुञ्चितमेचकाः नववधूरेषा वधूलक्षणम् ॥१६॥

(56) ( सर्वे कुमारं दृष्ट्वा संभ्रान्ताः )

(57) का—महदिदमाकारवद्धं तेजः, यदस्य दर्शने बहुदिवसाधिष्ठितराज्ञान्तःपुरस्यापि तत्पूर्वोपनतराजदर्शनस्येव शिथिलीभूतः सत्त्वावष्टम्भः । कोऽसाविति जिज्ञासमानोऽपि नैनमनुपोद्धातः प्रष्टुमुत्सहे । सर्वथा तावत्—

(58) कर्णान्तविश्रान्तविलोचनश्री-
ज्यांघातरेखारञ्चितप्रकोष्ठः ।
तेजोनिधिर्नूनमसौ कुमारः
कुलस्य सारोद्धरणं नृपाणाम् ॥ १७ ॥

(59) कु—स्वागतमत्रभवतः, अत्र पूर्वोपविष्टा वयम्, तदिहास्यतां भवतीभिः ।

(60) विन्ध्याद्रिगन्धगजदानसुगन्धयोऽमी
पम्पासरः सलिलवीचिविमर्दशीताः ।
श्रोणीपयोधरसमुद्वहनप्रवृत्तं
मार्गश्रमं व्यपनयन्तु वनान्तवाताः ॥ १८ ॥

(61) (सर्वे उपविष्टाः)

(62) नि—(जनान्तिकम्) भट्टिदारिए, किं णु पुंणमासीचंदमंडलादो विअ इमस्य मुहादो अमुअरसनिस्संदो निस्सरइ ? (भर्तृदारिके, किं नु पौर्णमासीचन्द्रमण्डलादिव एतस्य मुखादमृतरसनिष्यन्दो निःसरति ?)

(63) की०—(आत्मगतम्) एतरं पेक्खंखंतरस वि जणस्स चंदसिलामअं विअ अमुअरसणिस्संदणिब्भरं होइ हिअअं। (प्रकाशम्) हला, अग्गदो होहि। एतदन्तरं प्रेक्षमाणस्यापि जनस्य चन्द्रशिलामयमिवामृतरसनिष्यन्दनिर्भरं भवति हृदयम्। (प्रकाशम्) हला, अग्रतो भव।

(64) नि०—अपुरुवपुरुसदंसणेण ण वड्ढाविदा भट्टिदारिआ। (तथा कृत्वा) (अपवारितकेन सस्मितम्) अइ, परिहरइ चंददंसणं कमलिणि त्ति सच्चो दाणिं लोअप्पवादो। (अपूर्वपुरुषदर्शनेनन वर्धापिता भर्तृदारिका। (तथा कृत्वा) (अपवारितकेन सस्मितम्) अयि, परिहरति चन्द्रदर्शनं कमलिनीति सत्य इदानीं लोकप्रवादः।)

(65) की०—(भ्रुकुटीकुटिलनिरीक्षितकेण निपुणिकां पश्यति).

(66) कु०—आर्य, आश्चर्यदर्शनं हि कुतूहलस्थानं तदुच्यते। आकृति प्रत्ययादेवास्या राजवंशाभिजनत्वमनाख्यात-निश्चितम्; किं तु—

(67) सा राजपुत्री सुगृहीतनाम्नां
किंनामधेयं कुलमीश्वराणाम्।
अन्वग्रहोज्जन्ममहोत्सवेन
श्रीरेव साक्षादिव सागराणाम्॥ १६॥

(68) का—श्रोतुमर्हति महाभागः । अस्ति शूरसेनो नाम जनपदः । तेषां स्वामी विख्यातकीर्तिः कीर्तिषेणो देवः,

(69) अन्ये मन्युमहाभुजङ्गमितरे नीतिग्रहावग्रहं
प्राप्य प्रञ्जलयोऽपरे बलरजोवेतालरुद्धा दिशः ।
तन्त्रावापविदो नरेन्द्रपदवीं यातस्य यस्याधिकं
रक्षाभूतिमिवोद्वहन्ति शिरसा श्रीपादधूलीर्नृपाः ॥२०॥

(70) कु—श्रूयते शूरसेनाधिपतिः कीर्तिषेणो देवः । स इदानीं मध्यमो मध्यमलोकपालानाम् । ततस्ततः ।

(71) का—ततस्तस्येयमेका दुहिता प्राणेभ्योऽपि गरीयसी कीर्तिमती नाम ।

(72) कु—हिमवतो ननु गङ्गा प्रभवति । किमर्थं पुनरिदानीम्—

(73) हर्म्याग्रसञ्चरणदुर्ललितौ पुरे द्वौ
मञ्जीरमञ्जुरवशिञ्जितराजहंसौ ।
धत्तः पदं मुनिवने मनुजेन्द्रपुत्र्याः
प्रौढप्ररूढकुशकण्टकसीम्नि पादौ ॥ २१ ॥

(74) का—एतदपि श्रूयताम् । सेयमपर्याप्तशैशवक्रीडारसैव—

(75) यौवनारम्भयोगेन शोभामसदृशींगता ।

शिक्षागुणविशेषेण सूरेरिव सरस्वती ॥ २२ ॥

(76) कु—ततस्ततः ।

(77) का—ततो यत् प्रतिपन्नयौवनासु पितृभिः प्रतिपत्तव्यं तद्भगवत्यनुमतेनैव वर्त्मना—इति कृतनिश्चयः स्वयमेव दुहितरं 'चण्डिकायतनं गत्वा कानिचिदहान्याराधयतु भगवतीं विन्ध्यवासिनीम्' इति साभिसरामेनामितः प्रेषितवान् यदुनाथः । भद्रं तव ।

(78) कुमा—अशक्यारम्भप्रवृत्तं तत्रभवन्तं मथुरेश्वरं पश्यामि—

(79) इदं किलाविष्कृतकान्तिविस्तरं
तुषारवातातपदर्शनेष्वपि ।
शरीरमुद्यानशिरीषपेलवं
तपोवनक्लेशसहं भविष्यति ॥ २३ ॥

(80) कीर्ति—(आत्मगतम्) हद्धी धीलत्तणं हिअअस्स! जणप्पडिसिद्धप्पसरा वि पुणोपुणो तहिं एव्व दिट्ठी सज्जइ । (हा धिक् धीरत्वं हृदयस्य । जनप्रतिषिद्धप्रसरापि पुनः पुनस्तत्रैव दृष्टिः सज्जते ।

(81) चेटी—जेदु भट्टिदारिआ, सीसरइअअंजलिपुडो सिंहलओ

विएणवेदि—कप्पिदं आवासट्ठाणं, भअवदीए जोअसिद्धीए अभिप्पेदं एदं एव्व पवेसमुहुत्तअं ति। (जयतुभर्तृदारिका, शीर्षरचिताञ्जलिपुटः सिंहलको विज्ञापयति कल्पितमावासस्थानम्, भगवत्या योगसिध्याभिप्रेतमेतदेव मुहूर्तकमिति)

(82) कांचु—देवि, आपृच्छयतां महाभागः; गच्छामो वयम्।

(83) कुमा—गम्यतां पुनर्दर्शनाय। न विस्मरणीयोऽयमनुषङ्गदृष्टो जनः।

(84) कीर्ति—(कुमारं कटाक्षेणावलोकयन्ती सपरिवारा निष्क्रान्ता)।

(85) कुमा—गता प्रिया प्रस्तुतचित्तरागै-
रारेचितभ्रूललितैरपाङ्गैः।
कर्षत्यसौ मानसमस्मदीयं
मयि स्वमात्मानमुतार्पयन्ती॥ २४॥

(86) कथमियमस्या मार्गलता गमनविघ्नमाचरति?

(87) परिवृत्तमुखी नरेन्द्रकन्या
विटपोत्कम्पितभङ्गुरोत्तरीया।

स्तनयोरनयोर्नताङ्ग्यष्टिः
स्मरसर्वस्वसमुद्गयोर्भरेण ॥२५॥

(88) कथमेषा वक्त्रामोदप्रसक्तं मधुकरयुवानं लीलारविन्देन निवारयन्ती हन्त ! अन्तर्हिता तरुसङ्कटे ।

(89) याता नितम्बगुर्वी
यावद्यवान्मृगेक्षणा दूरम् ।
विवितगात्रीवान्त-
स्तावत्तावदवगाढा मे ॥२६ ॥

(90) (पर्युत्सुकस्तिष्ठति) (प्रविश्य विदूषकः)

(91) पुविदू—मअधप्पच्चंतवासिणं सवरपुलिंदाणं कुञ्जरएण पुरुसो पेसिदो—जह भणाइ अंअमंतगुत्तो तह होदव्वं ति । जाव चंडिआअदणजिण्णुज्जाणगदं वअस्सं उवसप्पामि । (मगध-प्रत्यन्तवासीनां शबर पुलिन्दानां कुञ्जरकेण पुरुषः प्रेषितः—यथा भणति आर्यमन्त्रगुप्तः तथा भवितव्यमिति । यावत् चण्डिकायतनजीर्णोद्यानगतं वयस्यमुपसर्पामि) ।

(92) (उपेत्य) जेदु वअस्सो । (जयतु वयस्यः)

(93) कुमा—(विदूषकं हस्ते गृहीत्वा) सखे वैखानस,

(94) स्वप्नोपनता लक्ष्मीः

प्राप्ता गन्धर्वनगररेखा या।
प्रादुर्भूय नृपसुता
भूयः सहसा तिरोभूता ॥२७॥

(95) विदू—का सा राअदारिआ णाम ? (का सा राजदारिका नाम ?)

(96) कुमा—एवमिव ।

(97) विदू—अविहा ! अंधस्सकूपपतणं संवुत्तम्, पुव्वं रज्जणासो तते इत्थिआतंतुणा (बंधणं) । (हा) ! अन्धस्य कूपपतनं संवृत्तम्, पूर्वं राज्यनाशः ततः स्त्रीतन्तुना (बन्धनम्) ।

(98) कुमा—वैखानस, मा मैवम्; इतस्तथा प्रस्थितायाः—

(99) अस्याः सखे क्षणमदृश्यत रोमराजी
स्रस्तेंऽशुके स्तनभरान्मृगलोचनायाः ।
मालेव षट्पदमयी भुवनानि जेतुं
मौर्वीकृता भगवता मकरध्वजेन ॥ २८ ॥

(100) विदू—ही ! ही ! पेक्ख पेक्ख, पुंफणिंमलो अअं ओदण रासी दीसइ । ( ही ! ही ! पश्य पश्य, पुष्पनिर्मलोऽय-मोदनराशिर्दृश्यते).

(101) कुमा—(दृष्ट्वा) अयं तस्या लतावसक्तपतितः प्रभावर्षी

मौक्तिकहारः । आनीयतां तावत् ।

(102) विदू—साहू । ण मोत्तिअआरो बमुक्खिदस्स मे ओद णरासी दीसइ । (गृहीत्वोपहरति)
(साधु ! न मौक्तिकहारो बुभुक्षितस्यौदनराशिर्दृश्यते).

(103) कुमा—(हारमादाय)

(104) अस्थानलक्षणसम्भ्रममुक्तं मुक्तास्वरूपेण ।
परिवृत्तं पश्य सखे किं नु तयाविस्मृतं हृदयम् ॥२६॥

(105) विदू—भो वअस्स, अंमाणं कुम्भीलाणं आकिण्णेण परकेरएण गहिदेण ?
(भो वयस्य, अस्माकं कुम्भीराणामाकीर्णेन परकीयेन गृहीतेन ?)

(106) कुमा—वयस्य, मामैवम् । अस्ति तावदस्माकममुना प्रयोजनम् । पश्य—

(107) मन्दारपुष्पस्तवकाभिरामैः
सिन्दूरितो नायकरत्नभाभिः ।
श्रीविभ्रमाम्भोजमृणालकान्ति-
र्माङ्गल्यहेतोरयमस्तु हारः ॥ ३० ॥

(108) (प्रविश्य चेटः)

(109) चेटः—जेदु भट्टा. गहिदसंभाराम वाआमभूमौ वअस्सगणो पडिपालेदि ।

( जयतु भर्ता, गृहीतसंभारः स्म व्यायामभूमौ वयस्यगणः प्रतिपालयति ।)

(110) विदू—उट्ठेदु उट्ठेदु भवं, कालो वाआमभूमिगमणस्स ।

(उत्तिष्ठतूत्तिष्ठतु, कालो व्यायामभूमिगमनस्य ।)

(111) (सर्वे परिक्रमन्ति)

(112) कुमा—तामेवानुगतं चेतो मुक्तमूलमिदं मम ।
स्रोतोदैर्घ्यवशात्तोयं ह्रदस्येवावसीदति ॥ ३१ ॥

(113) अपि च—

(114) स्तनकलशघनोष्मणेव तप्तं
पृथुलनितम्बभराद्विवावसन्नम् ।
मम हृदयमधिष्ठितं मृगाक्ष्याः
स्फुरदधरप्रभयेव रक्तमासीत् ॥ ३२ ॥

(115) (निष्क्रान्ताः सर्वे)

(116) प्रथमोऽङ्कः

—०—

(117) द्वितीयोऽङ्कः

(118) (ततः प्रविशति मधुमञ्जरिका)

(119) मधु—अंमो ! पच्चासण्णो दाणिं कुसुमसरसिबिरसंणि-
वेससंणिहो महुमासो । जह साहग्गोलंबा सिलीमुहसणाहा
वंमहसिहिसंणिभा कुसुमगुच्छआ दीसंति असोअरुक्खाणं ।
हद्धि ! वंमहसरधूमिअहिअआए भट्टिदारिआए पडिऊल-
दंसणो महुमासो ।

(अंहो ! प्रत्यासन्न इदानीं कुसुमशरशिबिरसन्निवेशसन्निभो
मधुमासः । यथाशाखाग्रावलम्बाः शिलीमुखसनाथा मन्मथ-
शिखिसन्निभाः कुसुमगुच्छकाः दृश्यन्तेऽशोकवृक्षाणाम् ।
हा धिक् ! मन्मथशरधूमितहृदयाया भर्तृदारिकायाः
तिकूलदर्शनो मधुमासः ।

(120) (प्रविश्य भामिनिका)

(121) भामि—असंणिहिदाए मए ण जाणिदं तपोवणवास-
किलेस किलंतसरीराए केरिसो खु रत्तिगतो वुतंतो ।

( असंनिहितया मया न ज्ञातं तपोवनवासक्लेशक्लान्त-
शरीरायाः कीदृशः खलु रात्रिगतो वृत्तान्तः ।

(122) मधु—एसा भामिणिआ हिअरत्तीए सह पुरोहिदेहिं देव्वोपहारं णिव्वत्तिअ चंडिआअअणादो पडिणिवुत्ता। एसा वि रहस्सरक्खिणीणं सहीणं मज्झे णिउणिआए गणिज्जइ। ता इमं वि विदिदवुत्तंते करेमि। (उपेत्य) अइ कुसलं सहीए ?

(एषा भामिनिका। ह्यस्तनरात्र्याम् सह पुरोहितैर्देवोपहारं निर्वर्त्य चण्डिकायतनतः प्रतिनिवृत्ता। एषापि रहस्यरक्षिणीनां सखीनां मध्ये निपुणिकया गण्यते। तदिमामपि विदितवृत्तान्तां करोमि। (उपेत्य) अपि कुशलं सख्याः ?)

(123) भामि—अइ, कुदो अह्माणं कुसलावसरो तादिसं भट्टिदारिआए अणिणीदणिदाणं आतंकं चिंतअंतीणं ?

(अयि, कुतोऽस्माकं कुशलावसरस्तादृशं भर्तृदारिकाया अनिर्णीतनिदानमातङ्कं चिन्तयन्तीनाम् ?)

(124) मधु—जइ एव्वं, णिव्वुदा होहि, णिणीदं से आदंकणिदाणं।

(यद्येवम्, निर्वृता भव, निर्णीतमस्या आतङ्क निदानम्।)

(125) भामि—दिट्ठिआ पसंणा भअवदी विञ्झवासिणी। इमस्स सहआररुक्खस्स पच्छाये णिसंणिअ संलवामो।

(दिष्ट्या प्रसन्ना भगवती विन्ध्यवासिनी। एतस्य सहकारवृक्षस्य प्रच्छाये निषद्य सल्लपावः).

(126) मधु—एव्वं होदु। (एव्वं भवतु) (उभे उपविशतः)

(127) भामि—कहेहि ! कहेहि ! (कथय ! कथय !).

(128) मधु—सुणिअदु, हिओरत्तीए किंवि उक्कंठिदा विअ णिस्सेसणिवारिअपरिजणा णिउणिआमेत्तसहीजणा सअणिज्जं गदा भट्टिदारिआ।
(श्रूयताम्, ह्यस्तनरात्र्याम् किमपि उत्कण्ठितेव निःशेषनिवारितपरिजना निपुणिकामात्रसखीजना शयनीयं गता भर्तृदारिका).

(129) भामि—तदो तदो। ततस्ततः).

(130) मधु—तदो जाव अणंतरसअणिज्जं गदा ओसुत्ता णिउणिआ दाव उक्कंठिदाए अणिद्दाए णिव्विणोदाए कहंविएकस्सं जोह्णा सह्णे पडंते मंणिहिदेहिं वण्णएहिं एक्को वंमहजंमतराकिदी कुमारो आलिहिदो ताव पडिबुद्धाए णिउणिआए दिट्ठा कमलमुउलकोमलं सीसे अंजलिं गेह्णिअ 'अइ हिअअवल्लभ, णिग्घिणोसित्ति, भणंती भट्टिदारिआ। पच्चा अह्माणं णिउणिआए मंतिदं।
(ततो यावदनन्तरशयनीयं गतावसुप्ता निपुणिका तावदुत्कण्ठितया अनिद्रया निर्विनोदया कथमपि ज्योत्स्नाश्लक्ष्णे पटान्ते सन्निहितैर्वर्णकैरेको मन्मथजन्मा-

न्तराकृतिः कुमार आलिखितः। तावत् प्रतिबुद्धया निपुणिकया दृष्टां कमलमुकुलकोमलं शीर्षेऽञ्जलिं गृहीत्वा 'अयि हृदयवल्लभ, निघृ णोऽसि' इति भणन्ती भर्तृदारिका। पश्चादस्माकं निपुणिकया मन्त्रितम्).

(131) भामि—दिट्ठिआ एव्व पभादं ! पुढमं एव्व अह्माणं हिअअतुलिओ एसो अत्थो। को उण सो ? अहवा को एत्थ विआरो ? णं सो एव्व जो अंमेहिं चंडिआअअणे दिट्ठो।

( दिष्ट्यैवं प्रभातम् ! प्रथममेवास्माकं हृदयतुलित एषोऽर्थः। कः पुनः सः ? अथवा क एष विचारः ? ननु स एव योऽस्माभिश्चण्डिकायतने दृष्टः).

(132) अह इं। को अण्णो पुण्णमसचंदं मोत्तूण कुमुदिणीए हिअअवल्लभो ? (अथ किम्। कोऽन्यः पौर्णमासचन्द्रं मुक्त्वा कुमुदिन्या हृदयवल्लभः ? )

(133) भामि—होदु, अब्भंतरं एव्व पविसामो। (निष्क्रान्ते) (भवतु अभ्यन्तरमेव प्रविशावः)

(134) प्रवेशकः.

(135) (ततः प्रविशति विदूषकः)

(136) विदू—(निःश्वस्य) दिढं ह्मि णिव्विण्णो इमस्स वयस्सस्य

अदेसकालुप्पुण्णुंमादव्वाहिं उवअरंतो। जोच्चिअ पुढमं हुदसेसेहिं सकारुच्चेत्तहिं भिक्खाहारेहिं संवड्ढिअसरीरो संवुत्तो सोच्चिअ अहं वि लहिअपरदुदिट्ठी कडंगरीअ-असब्बंभआरी अलद्धकक्खंतरप्पवेसो कडअप्पाहुणिओ विअ वंजिदसद्दं विहिंदओ इदो तदो आहिंडेमि । जइ णिमंतणकाले णिमंतिदेहिं बह्मणेहिं सह अब्भंतरं पविसामि तदो किं मए पडिवत्तव्वं ? होदु, इमस्स लदा-मंडपस्स बाहिरपच्छाए मुहुत्तं विस्समिस्सं। (तथा करोति).

(निःश्वस्य) (दृढमस्मि निर्विण्णोऽस्य वयस्य-स्यादेशकालोत्पन्नोन्मादव्याधिमुपचरन्। य एव प्रथमं हृतशेषैः सकारुच्चित्रकैः भिक्षाहारैः संवर्द्धितशरीरः संवृत्तः स एवाहमपि लघूकृतपरदुर्दृष्टिः कडङ्गरीयसब्रह्मचारी अलब्धकक्ष्यान्तरप्रवेशः कटकप्राघुणिक इव वर्जितशपितव्यबृंहितव्य इतस्ततः आहिण्डामि । यदि निमन्त्रण काले निमन्त्रितैर्ब्राह्मणैः सहाभ्यन्तरं प्रविशामि ततः किं मया प्रतिपत्तव्यम् ? भवतु, अस्य लतामण्टपस्य बाह्यप्रच्छाये मुहूर्तं विश्रमिष्यामि) (तथा करोति).

(137) (ततः प्रविशति निपुणिका)

(138) निपु—रत्तिप्पआअरकिलन्तसरीरा गहिदकुमुदिणिव्व दिवा णिद्दं गदा भट्टिदारिआ। जाव आवासगदां एव्व भअवदिं

जोअसिद्धिं पेक्खामि। सा एव्व णो इमस्सिं संकटप्पवाहे संकमो भविस्सिदि। (परिक्रामति)

(रात्रिप्रजागरक्लान्तशरीरा गर्भितकुमुदिनीव दिवानिद्रां गता भर्तृदारिका। तावदावासगतामेव भगवतीं योगसिद्धिं प्रेक्षे। सैव न एतस्मिन् सङ्कटप्रवाहे सङ्क्रमो भविष्यति) (परिक्रामति).

(139) (ततः प्रविशति परिव्राजिका)

(140) परि—अप्याजवञ्जवसुखान्यवधीरयन्ती
खद्योतवैद्युतरुचिक्षणभङ्गुराणि।
कृष्टाहमीश्वरसुतागुणपाशबन्धै-
र्बद्धं कलेवरभरं पुनरुद्वहामि ॥ १ ॥

(141) भोः! तथाभूते स्वजनवृत्तान्ते निर्वेदप्रव्रजिताप्यायुपजीविनमात्मानं मन्यमाना देशाद्देशान्तरं परिसरन्ती यदृच्छया शूरसेनमथुरां प्राप्य तत्र च कीर्तिषेणमहिष्या राजन्वत्या साकमभ्याससमावसनकृतसख्या प्रतिवसामि। तद्दुहितरि मदङ्कसंवर्द्धितायामपत्यस्नेहवती तपोवनाभिमुखीमप्येनामनुगतास्मि। यावदेनामनुरक्तपतिं कुलगामिनीं पश्यामि तावत् कुतो मे निःसङ्गता? कुतः—

(142) आश्रयति माधवी चेदाश्रमसहकारपादपस्कन्धम्।
स्वार्थक्रीतां लभते निर्वृतिमारण्यको वर्गः ॥ २ ॥

(143) सा पुनरमीषु दिवसेषु किञ्चिदकल्यरूपा लक्ष्यते । वक्ति च लोकः—

(144) वनवासमिमं कथं सहेत सा पितुरुत्सङ्गसुखैधिता तथा ।
क्रममेष्यति यत्र नैष्ठिकस्तरुवल्कावरणोऽपि तापसः ॥ ३ ॥

(145) अपि च—

(146) क्षणक्षीणौ बाहू च्युतपतितकेयूरवलयौ
परिम्लानावस्थः श्वसनपवनैरोष्ठरुचकः ।
निवृत्तस्नानीयः शिरसिजकलापो वपुरभू-
दसूर्यम्पश्यायाः (सरस) निभृतं राजदुहितुः ॥४। इति ।

(147) मम पुनरयं प्रतर्कः । तस्या हि—

(148) जातं विभ्रमदृष्टिपातशबलं पाण्डु द्वयं गण्डयो-
र्गाढे यौवनसोष्मणी स्तनतटे गाढोऽपि चिन्ताज्वरः ।
अव्यक्तस्तनिमा स्वकान्त्युपचयादप्येवमालक्ष्यते
प्रभ्रष्टाभरणप्रदेशविषमेष्वङ्गेष्वनङ्गामयः ॥ ५ ॥

(149) को नु खल्वेष नभसः श्येनचरणभ्रष्टो निपतितश्चित्रपटः ?

(150) दृष्ट्वा नभस्तः शिखिबर्हभारशारोदरं चित्रपटं पतन्तम् ।
अनभ्रसंसर्गमभूतपूर्वमैन्द्रं धनुःखण्डमनुस्मरामि ॥ ६ ॥

(151) भवतु, अभूमिस्पृष्टमेनं सम्भावयामि ।

(152) (गृहीत्वा शिलातले समुपविश्य निर्वर्णयति).

(153) निपु—एत्थ भअवदीए लदामंडपं । (प्रविष्टकेनावलोक्य)एस भअवदी एकं चित्तपडं पेक्खंती सिलाअले णिसण्णा ! अंहो ! एसो चित्तपडो जो एकंते णिसण्णाणं वहुएहिं आसाबंधेहिं सहीणं आमिसखंडलुद्धेण सेणेण आक्खित्तो ।

(अत्र भगवत्या लतामण्डपम् । (—) एषा भगवती एकं चित्रपटं प्रेक्षमाणा शिलातले निषण्णा । अहो ! एष चित्रपटो य एकान्ते निषण्णानां बहुभिराशाबन्धैः सखीनामामिषखण्डलुब्धेन श्येनेनाक्षिप्तः)

(154) परि—महदिदमाकारबद्धं तेजः ! अस्य हि—

(155) दर्पणगतमिव सवितुः पटान्तरचितं महानुभावस्य ।
प्रतिबिम्बमिव प्रतिमुखपतितं प्रतिहन्ति मे दृष्टिम् ॥७॥

(156) (पुनः सावधानं दृष्ट्वा) हा ! महादेवि, (मोहं गता).

(157) निपु—हद्धि ! चित्तपडं पेक्खंती हा ! महादेवि त्ति मोहं गदा भअवदी । महत्तेण उप्पादेण होदव्वं । (सहसोपसृत्य तामुत्सङ्गेनादाय) समस्ससिहि समस्ससिहि ।

(हा ! कृधि, चित्रपटं प्रेक्षमाणा हा ! महादेवि इति मोहङ्गता

भगवती । महोत्पातेन भवितव्यम् । (—) समाश्वसिहि समाश्वसिहि ।

158) परि—(ईषदिव समाश्वस्य) हा ! महादेवि, तदा तुए पदिलोअं पत्थिदाए जो मम हत्थे णिक्खत्तो, जो पडिपक्खभयादो चलकाकपक्खओ अवमहरेहिं अमच्चकुमारेहिं कल्लाणसिरी । (पुनरपि मूर्च्छिता)

(हा ! महादेवि, तदा त्वया पतिलोकं प्रस्थितया यो मम हस्ते निक्षिप्तः यः प्रतिपक्षभयाच्चलकाकपक्षको अवमहरैः अमात्यकुमारैः कल्याणश्रीः) (—)

159) विदू—किं णु खु लआघरब्भंतरे सद्दो विअ ? होदु, विडपंतरेण पेक्खामि । (तथा कृत्वा) वअस्सपडिकिदिं पेक्खती एका परिव्वाजिआ मोहं गआ; तं पुण एका इत्थिआ उच्चंगे गेह्निअ समस्सासं कुणइ । तक्केमि सा एसा विणअंधरेत्ति णिव्वेदपव्वाजिदा ।

(किं नु खलु लतागृहाभ्यन्तरे शब्द इव ? भवतु, विटपान्तरेण प्रेक्षे । (—) वयस्यप्रतिकृतिं प्रेक्षमाणैका परिव्राजिका मोहं गता; तां पुनरेका स्त्री उत्सङ्गे गृहीत्वा समाश्वासं करोति । तर्कयामि सैषा विनयन्धरेति निर्वेदप्रव्रजिता)

(160) निपु—समस्ससिहि समस्ससिहि । (समाश्वसिहि समाश्वसिहि).

(161) परि—(समाश्वस्य) जइ सो अविच्छिद्दसरीरो एत्ताह एत्तिअं परिवड्ढिदो भवे । (—) (यदि सोऽविच्छिन्नशरीरः एतावता एतावान् परिवर्द्धितो भवेत्).

(162) निपु—(आत्मगतम्) अवि णाम भअवदीए स जणो भट्टिदारिआए हिअअवल्लवो जणो भवे ? (प्रकाशम्) भअवदि, को एसो अब्भाआरिअजणजोग्गो आआसो ? का एसा विण्णाणविसेसविसरिसी असक्कया वाणी ? (—)अपि नाम भगवत्याः स्वजनो भर्तृदारिकाया हृदयवल्लभो जनो भवेत् ? (—) भगवति क एषोऽभ्यागारिकजनयोग्य आयासः ? कैषा विज्ञानविशेषविसदृशी असंस्कृता वाणी ?)

(163) परि—(प्रत्यवमृश्य) अये ! निपुणिका ।
(अयि निपुणिके,)

(164) निपु—(आत्म) मोहं पडिबुद्धाए इमए सव्वं विण्णावेमि ।

(मोहं प्रतिबुद्धाया अस्याः सर्वं विज्ञापयामि । (प्रकाशम्) कहिं सो कुमारो कल्लाणसिरी ? ( कुत्र स कुमारः कल्याणश्रीः ?)

परि—

(165) बाष्पान्धापि यदादरं दश दिशो दृष्टिः समुद्वीक्षते
मस्थाविरेऽपि परिस्नुतस्तनमुखं वक्षो यदुत्कण्ठते ।
चिन्तातूलिकया मनोरथमये कुड्ये यदालिख्यते
भ्रष्टं तदपत्यकं निपुणिके दग्धो विधिः पृच्छयताम् ॥८॥

(166) (पुनरपि चित्रपटं निरीक्ष्य).

(167) यौ द्वौ शैशवमुष्टिभेदविशदौ रेखातपत्राङ्कितौ
क्षीणौ चङ्क्रमणे मदङ्गुलिमुखं याभ्यां समालिङ्गितम् ।
वन्द्ये यावपि कारितौ गुरुजने मात्रा बलादञ्जलिं
तौ हस्तावुरगेन्द्रभोगसदृशप्रौढप्रमाणौ कथम् ॥९॥

(168) (बाष्पं विकिरति)

(169) निपु—(पत्रपुटेन गोत्रवारि गृहीत्वा) भअवदि, इदं मुहोदअं ।

(—)(भगवति, इदं मुखोदकम्)

(170) परि—ईषदिव प्राप्तानृण्या बुद्धिः ।

(171) निपु—भअवदि, एदसरिसवण्णो कुमारो भट्टिदारिआए दिट्ठो । ता इयं आलिहिदा तस्स पडिकिदी । सहीजण हत्थादो अमिसखंडलुद्धेण सेणेण आक्खित्तो पुणो वि गअणा भअवदिहत्थं पत्तो जइच्छाए अअं चित्तपडो ।

(भगवति, एतत्सदृशवर्णः कुमारो भर्तृदारिकया दृष्टः ।

तदियमालिखिता तस्य प्रतिकृतिः । सखीजनहस्तादामि-षखण्डलुब्धेन श्येनेनाक्षिप्तः पुनरपि गगनाद्भगवतीहस्तं प्राप्तो यदृच्छयायं चित्रपटः).

(172) परि—एवं भोः ! कथय, कथमेवं वर्णाकारस्तया कुमारो दृष्टः ।

(173) निपु—एव्वं विअ । (एवमिव)

(174) परि—अपि नाम तयायमालिखितः स एव मगधकुलाङ्कुरः कुमारो भवेत् । न तदाकारानुकारी कश्चिदेकः ।

(175) निपु—अच्चाहिदं एदं हि अअं अण्णं अणु भट्टिदारओ भअवदीए । (अत्याहितमेतद्धि । अयमन्यश्च ननु भर्तृदारको भगवत्याः ?

(176) परि—निपुणिके, कथयामि ते भूतार्थम् । आसीत् पुरा सुन्दरवर्मा नाम मगधेश्वरः । तस्याग्रमहिषी मदिरावती नाम । तस्या धात्रेयिका सखी कुमारधात्री च भूता दैवादन्तर्हिते तत्र राजकुले निर्वेदप्रव्रजिताहं मथुरां प्रविश्य प्रतिवसामि । सम्प्रति पुनः कीर्तिमती मे सर्वस्वम् ।

(177) विदू—ही ! ही ! एस ण्हातकोह्मि संवुत्तो; दुम्मेदो वेखाणसो त्ति मंतगुत्तो मंतेदि ।
(ही ! ही ! एष स्नातकोऽस्मि संवृत्तः; दुर्मेधो वैखानस इति मन्त्रगुप्तो मन्त्रयति).

(178) परि—(आत्मगतम् ) लब्ध इदानीमवसरः पृच्छामि तावदेनाम् । यत् कीर्तिमतीमन्तरेण तदखिलं निपुणिका वेत्ति ।

(179) (नेपथ्ये गीयते)

(180) न शशाक शशाङ्कमीक्षितुं न समाकर्णयितुं सुखोदितम् ।
न च पल्लवभङ्गकल्पिते शयनीये शयितुं नृपात्मजा ॥ २० ॥

(181) परि—अहो ! यावत् साधु गीतमेतयोर्वैतालिकयोर्वैतालिकीयम् । निपुणिके, कीर्तिमतीमन्तरेण किञ्चिदिह भवतीं पृच्छामि ।

(182) निपु--भअवदि, आणवेदु । (भगवति, आज्ञापयतु)

(183) विदू—तक्केमि राअदारिआए एसा पच्चअं गदा सही । (तर्कयामि, राजदारिकाया एषा प्रत्ययं गता सखी).

(184) परि--आकस्मिकीमरतिमुद्वहतीव तस्या
वक्त्रं कुतो वसुमतीपतिनन्दनायाः ।
श्च्योतद्विलोचनजलाविलगण्डरेखं
नीहारनीरकणिकार्द्रमिवारविन्दम् ॥ २१ ॥

(185) निपु—एसो भट्टिदारिआए चित्तगदो कुमारो पुच्छिदव्वो भअवदीए । सा दाणिं णीसासजिण्णहिअआ कोमलकद-

लिआ विअ इदी तदो पज्जोढुती मणोरहसहीजणं वि मुंचइ। जइ तं अंतरेण भअवदी ण साहु पेक्खिस्सदि, तदो सा अवस्सं तवस्सिणी सोअघरणिधरसिहरारूढिया भविस्सिदि

(एष भर्तृदारिकायाश्रितगतः कुमारः प्रष्टव्यो भगवत्या। सा इदानीं निःश्वासशीर्णहृदया कोमलकदलिकेव इतस्ततः प्रलुठन्ती मनोरथसखीजनमपि मुञ्चति। यदि तामन्तरेण भगवती न साधु प्रेक्षिष्यते, ततः सावश्यं तपस्विना शोकधराधरशिखरारूढा भविष्यति।)

(186) परि— सा राजपुत्री नयति त्रियामां
कान्तं विना जागरणारुणाक्षी।
मामेव मन्ये प्रतिपालयन्ती
प्रत्यूषवेलामिव चक्रवाकी॥ १२॥

(187) विदू—ही! ही! भिक्ख गदी णिमंतणिमंतणं पत्तो। (सहसोपसृत्य) एस वैखाणसो पणमदि।
(ही! ही! भिक्षां गतो निमन्त्रनिमन्त्रणं प्राप्तः। (—) एष वैखानसः प्रणमति).

(188) परि—अये! वैखानसः प्राप्तः का नामेयमनभ्रवृष्टिः ?

(189) निपु—(आत्मगतम्) को एसो आकिदीए मक्कडओ वाआए गद्दभो ?

(क एष अकृत्या मर्कटको वाचा गर्दभः ?)

(190) विदू—एसो कल्लाणसिरिणो णमुकारो।(अञ्जलिं गृह्णाति).
(एष कल्याणश्रियो (—) नमस्कारः।

(191) निपु—( आत्मगतम् ) एस वअस्सो तस्स जणस्स।
(—) ( एष वयस्यस्तस्य जनस्य ).

परि—

(192) सामन्ताग्रवधूकरव्यतिकरैः सञ्चारितो दर्पणः
सौधोत्सङ्गनिवेशितो नवशशी पौरैः समुद्वीक्षितः।
वल्लीभिः स्तनदायिनीभिरुचितस्कन्धः पुनर्मातृभिः
पुण्यः पुष्पपुरोत्सवः क्व नु गतो वैखानस ब्रूहि मे ॥१३॥

(193) विदू—आसण्णं दे पुत्तदंसणम्। अणुवअस्सं राअदारिआ संतप्पदि, राअदारिआदंसणुप्पण्णमदणुंमादो बहुलपक्ख-चंदस्सइवअणुदिणुसंओभीरंतसरीरो वअस्य दीसइ।

(आसन्नं ते पुत्रदर्शनम्। अनुवयस्यं राजदारिका सन्तप्यति, राजदारिकादर्शनोत्पन्नमदनोन्मादो बहुलपक्ष चन्द्रस्य इव अनुदिनं समवक्षियमाण शरीरो वयस्यो दृश्यते).

(194) परि—साधु भोः—

(195) कुवलयदलदीर्घदृष्टिपाशां कुसुमशरासनवागुरां कुमारः।
नृपदुहितृमयीं निरुद्धवर्त्मा मृगपतिपोतसमः समाजिहीते ॥१४॥

(196) निपु—उस्ससिदं विअ मे हिअअं। किं णु हु सव्वं भवे ? (उच्छ्वसितमिव मे हृदयम्। किं नु खलु सर्वं भवेत् ?)

(197) परि—वत्स, यावदविदितमेतदस्माभिः। केयमतर्किता दृष्टिवृद्धिः ?

(198) विदू—एवं विअ। (एवमिव).

(199) परि—एवमेतत्। प्रयोजनवदिव मे जीवितधारणम्।

(200) विदू—भोदि, राअदारिआए वअस्सपडिकिदी आलिहिदा, तुए वि मज्झ पडिकिदी आलिहिदव्वा।
(भवति, राजदारिकया वयस्यप्रतिकृतिरालिखिता, त्वयापि मम प्रतिकृतिरालिखितव्या).

(201) परि—(सस्मितम्) भजमानमभिहितम्।

(202) निपु—ध्वंस ! वडरवडुअ। (ध्वंस ! वडर वटुक).

(203) विदू—होदि, मा कुप्पहि एसो तुह्मे पसादेमि। (उत्तरीयादुन्मुच्य हारमर्पयति).

(भवति, मा कुप्य, एष युष्मान् प्रसादयामि) (—)

(204) निपु—हं ! एसो सो हारो जो भट्टिदारिआए पणट्ठो। (हारमञ्जलिना गृह्णाति) हं ! एष स हारः, यो भर्तृदारिकायाः प्रणष्टः) (—)

(205) परि---(आत्मगतम्) उभावपि मदुत्सङ्गसंवर्द्धितौ परस्परं कामातुरौ कीर्तिमती कल्याणवर्मा च । तदनयोर्वागर्थयोरिव समवायं करिष्यामि । (प्रकाशम्) ममायमभिसन्धिः । (धातुरागेण पटान्ते समालिख्य वाचयति).

(206) शौनकमिव बन्धुमती कुमारमविमारकं कुरङ्गीव ।
अर्हति कीर्तिमतीयं कान्तं कल्याणवर्माणम् ।।१५।।

(207) गूढरक्षितमेनं कुमाराय समर्पय प्रदोषे । पुनरात्मा दर्शयितव्यः । (चित्रपटमर्पयति).

(208) विदू---जं भअवदी आणवेदि (यद्भगवत्याज्ञापयति) (चित्रपटं गृहीत्वा निष्क्रान्तः).

(209) निपु---भअवदि, कहं भट्टिदारिआए पाणा रक्खिदव्वा ? (भगवति, कथं भर्तृदारिकायः प्राणा रक्षितव्याः ?)

(210) परि---माभूत्ते विषादः । पश्य---

(211) गूढप्रयोगनिभृतापि समर्पयन्ती (प्रियमर्पयन्ती ?)
चिन्ताज्वरं व्यपनयानि नृपात्मजायाः ।
पर्जन्यघोषविमुखीव दिवः पतन्ती
भूमेरवग्रहविशोषमनभ्रवृष्टिः ।।१६।।

(212) ( इति निष्क्रान्ताः सर्वे )

(213) द्वितीयोऽङ्कः

---

(214) ## तृतीयोऽङ्कः

* * *

(215) (ततः प्रविशति कामयमानावस्थः कुमारः)

कुमा—

(216) अचिन्तनीयं मनसापि लब्धुमज्ञातभावं जनमन्तरेण ।
मय्येवमाकस्मिकमत्सरोऽसौ मनोभवः किं नु फलं वहेत ॥१॥

(217) (मदनबाधां निरूप्य) भोः कष्टं ! यौवनमध्यंदिनप्रकटित मिथ्यामनोरथमृगतृष्णिकाविषमेषु विषयमरुषु भ्राम्यतः कामुकजनपथिकसार्थस्य सन्तापमुत्पादयत्यङ्गजन्मपतङ्गः । कुतः—

(218) यद्यपि कबलीभूतो हरकोपानलत्विषाम् ।
दाहात्मा दृश्यते तेन नूनं मकरकेतनः ॥२॥

(219) धिग्भोः पराश्रयेण बलवत्तरमात्मानं मन्यते मदनः । कुतः—

(220) उन्निद्राशोकचूतप्रसवपरिमलोद्गन्धयो गन्धवाहाः
प्रेङ्खद्बालाकमालाशतशबलमुखः प्रावृषेण्योऽन्धकारः ।
सौधोत्सङ्गप्रसङ्गी नवशशिविशदः शारदो वा प्रदोषो
यद्यस्त्रं न स्फुरेते स्वयमतनुरसौ कातरः किं करोमि ॥३॥

(221) अपि नाम पुनरपि सा दृश्येत ? भोः कष्टं ! सर्वः स्वकार्यकृपणो जीवलोकः । कुतः—

(222) उपकृतवतीमपि दृशं रूपामृतसंविभागेन ।
वञ्चयति स्मरणसुखे तस्या हतहृदयमेतन्मे ॥४॥

(223) क्व नु खलु जीवितसर्वस्वभूतस्तस्या मौक्तिकहारः । आः ! यदि नाम कदाचित्तस्या राजदुहितुः सखीजनो दृश्येत परिजनो वा—इत्यमुना मनोरथेन निर्गतो वयस्यो वैखानसः, तस्य हस्ते हारः । केनेदानीमुपष्टम्भेनावसीदन्तमात्मानमवलम्बिष्ये ? भवतु, प्रियादर्शनमुहूर्तभाजनीभूतं तदेव जीर्णोद्यानं गत्वा पर्युत्सुकमात्मानं विनोदयामि ।

(224) (ततः प्रविशति विदूषकः)

(225) विदू—(परिक्रम्यावलोक्य) एसो सावमुत्तविण्णत्तिविण्णाणो धरणिपडिओ विअ विज्जाहरदारओ सोअणीअदस्सणीयाकिदी वअस्सो दीसइ । (उपेत्य) जेदु वअस्सो । अविहा ! ण त्थि मे पडिवअणं । केवलं चिंताणिमीलिअलोअणो उंमीलिओविअ आलेख्वजोख्वे लख्विअदि । एव्वं दाव भणिस्सं ! राअदारअ, किं राअसिरी चिंतीअदि ? (—) (एष शापमुक्तविज्ञप्तिविज्ञानो धरणि-

पतित इव विद्याधरदारकः शोचनीयदर्शनीयाकृतिर्वयस्यो दृश्यते। (—) जयतु वयस्यः। अविहा ! नास्ति मे प्रतिवचनम्। केवलं चिंतानिमीलितलोचन उन्मीलित इवालेख्यजोद्धो लक्ष्यते। एवं ताडयामि। राजदारक, किं राजश्रीश्चिन्त्यते ? )

(226) कुमा—(उन्मील्यवलोक्य) अये ! वयस्यो वैखानसः। वयस्य, एवमेतत्, किं तु—

(227) रत्नोद्भासितमस्तकै रणगतैस्तेजस्विभिर्भोगिभि-
देवे प्रादुरभूत् प्रचेतसि विभौ या वाहिनीभर्तरि।
या साक्षात् पुरुषोत्तमप्रणयिनी नान्यं वृणीते पतिं
राजश्रीरिव मृग्यते हृदि सदा सा राजपुत्री च मे ॥५॥

(228) वयस्य, सावशेषतुषरत्वान्मधुमासदिवससुखानां शैलेय-गन्धिनि शिलातलेऽस्मिन् मुहूर्तमासिष्यावहे।

(229) विदू—जं भट्टिवअस्सो अणवेदि। (यद्भर्तृवयस्य आज्ञापयति).

(230) (उभावुपविशतः)

(231) कुमा—कान्तापयोधरसंसर्गश्लाघनीयो मौक्तिकहारस्तावदानीयताम्।

(232) विदू—अविहा ! कहिं हारो पणट्ठो ? (अविहा ! कुत्र हारः प्रणष्टः ? )

(233) कुमा—धिङ्मूर्ख,

(234) विदू—ही ! ही ! होदु होदु मुक्खो वैखाणसो अपंडितो वैखाणसो त्ति मम दाव वअणं सुणाहि, पच्छा मं उवालभेहि। इदो अहं राअदारिआकेरअमोत्तिअहारं अण्णेसंतीए विअ राअदारिआ हिअअणिव्विसेसाए णिउणिआए दिट्ठो म्हि। (ही ! ही ! भवतु भवतु मूर्खो वैखानसः, अपण्डितो वैखानस इति । मम तावद्वचनं शृणु, पश्चान्मामुपालभस्व । इतोऽहंराजदारकीयमौक्तिकहारमन्विष्यन्त्येव राजदारिकाहृदयनिर्विशेषया निपुणिकया दृष्टोऽस्मि ).

(235) कुमा—(सकुतूहलम् ) किमसि निपुणिकया दृष्टः ? ततस्ततः ।

(236) विदू—किं तदो तदोत्ति ? रूपाभिगहिदस्स कुंभीलस्स का पडिपत्ती । (किं ततस्तत इतिः ? रूपाभिगृहीतस्य कुम्भीलस्य का प्रतिपत्तिः ).

(237) कुमा—मुक्तः परिहासः, विस्पष्टमभिधीयताम् ।

(238) विदू—एव्वं विअ । (चित्रपटं दर्शयित्वा) पेक्खदु पेक्खदु तुह्म पडिकिदिं विलिहियं (?) तत्तहोदीए चित्तं । (एव-

मिव । (—) प्रेक्षतां प्रेक्षतां तत्र प्रतिकृतिं विलिखितं तत्र-
भवत्या श्चित्रम् ).

(239) कुमा—अपि सत्यमिदम् ? को नाम पुरुषः श्रद्दध्यादेवंभू-
तमभ्युदयविशेषम् ? तथा बलात् प्रह्लादते मे हृदयम् ।
पश्य—

(240) सम्प्रत्यहं प्रणयिनीबहुमानपात्रं
प्रोद्भिन्नरोमपुलकोपहितं शरीरम् ।
सिन्दूरचूर्णरचनारमणीयकुम्भ-
नीराजितं नृपकरीव समुद्वहामि ॥६॥

(241) अपि च—

(242) वामो गन्धवहः पुरा पुनरसौ वासन्तिको दक्षिणः
प्रारम्भे कुलिशं प्रसूनधनुषः पश्चात्तु बाष्पाः शराः ।
यामिन्यामपनीतवह्निकणिकाः पीयूषनिष्यन्दिन-
श्च्योतच्चन्द्रमरीचयोऽपि नियतं निर्वापयिष्यन्ति नः ॥७॥

(243) (सावधानं चित्रपटं निर्वर्णयति)

(244) विदू—किं तुए तत्तहोदीए सिप्पविण्णाणं, आदु अत्तणो
आकिदिसोहा णिव्वण्णीअदि ? (किं त्वया तत्रभवत्याः
शिल्पविज्ञानम्, उतात्मन आकृतिशोभा निर्वर्ण्यते ?)

(245) कुमा—नन्विदमेव चित्रकर्म कान्तायाः शिल्पगतं विज्ञान-

विशेषमस्मद्गतं प्रेम च प्रकटयति । कुतः—

(246) प्रेम्णि स्थितेऽपि तस्याः सम्मुखलज्जाहृते समाधाने ।
मत्प्रतिकृतिरचनायामासीदन्ते विसंवादः ॥ ८ ॥

(247) विदू—भो वअस्स, तुह तत्तहोदीए अ दोण्णं वि तुह्माण कदरस्स सविसेसं सिप्पविण्णाणं ति महंतो मे संदेहो । ता इमेहिं विंज्झसिहरोज्झरसंणिहिदेहिं दाउराअवंणएहिं पडंते विरएहि तत्तहोदीए पडिकिदिं । (भो वयस्य तव तत्रभवत्याश्च द्वयोरपि युवयोः कतरस्य सविशेषं शिल्प-विज्ञानमिति महान्मे सन्देहः । तदेभिर्विन्ध्याशिलोच्चय-संनिहितैर्धातुरागवर्णकैः पटान्ते विरचय तत्रभवत्याः प्रतिकृतिम्).

(248) कुमा—सखे, ममाप्ययमेवाभिप्रायः, किं तु—

(249) भवति निर्वृतये यदि लिख्यते कुसुमकेतुविकारवती प्रिया ।
स्मरकृशत्यमुना तु समाधिना ग्लपयितुं दयितां बत नोत्सहे ॥

(250) विदू—(चित्रपटं विस्तारयति).

(251) कुमा—(दृष्ट्वा 'शौनकम्' इत्यादि वाचयित्वा) कस्येय-मक्षरपंक्तिः ?

(252) विदू—भअवदीए जोअसिद्धीए । (भगवत्या योगसिध्याः)

(253) कुमा—अहो ! मां प्रति निष्कारणवत्सला भगवती ।

(254) विदू—(आत्मगतम्) दाणिं परमत्थदो जोअसिद्धिं णिवेदेमि। (प्रकाशम्) ण खु सा णिक्कारणवच्छला। (—) (इदानीं परमार्थतो योगसिद्धिं निवेदयामि। (—) न खलु सा निष्कारणवत्सला).

(255) कुमा—कथमिव ?

(256) विदू—एव्व विअ। (एवमिव).

(257) कुमा—(सकुतूहलम्) कथं ममैव निर्वेदप्रव्रजिता धात्री !

(258) (मम भाग्यवशात्तु मे प्रसूः ?)

परलोकात्पुनरागतेति मन्ये

अपि नाम विलोकयेयमाभ्यां

जनयित्रीमधुना विलोचनाभ्याम् ॥

(259) (बाष्पं विकिरति).

(260) विदू—धारेदु धारेदु भवं। अदिक्कंदो सो जंमंतरभूदो कालो। (धारयतु धारयतु भवान्। अतिक्रान्तः स जन्मान्तरभूतः कालः).

(261) कुमा—अत एव कथञ्चिदात्मा धार्यते।

(262) विदू—(पुनरपि चित्रपटं विस्तार्य) आलिहदु। (आलिखतु).

(263) कुमा—(कीर्तिमतीप्रतिकृतिमालिखति).

(264) (प्रविश्य नन्दकः)

(265) नन्द—जेदु भट्टा, ह्णाणवेला संपत्ता। (जयतु भर्ता, स्नानवेला संप्राप्ता)।

(266) विदू—अविहा! मम सरीराडो णिक्कंतेण बुबुक्खासंदोहेण विअ अच्चासंणो मज्झह्णो। (उत्थाय) उट्ठेदु उट्ठेदु भवं। (अविहा! मम शरीरान्निष्क्रान्तेन बुभुक्षासन्दोहेन-वात्यासन्नो मध्याह्नः। (—) उत्तिष्ठतु उत्तिष्ठतु भवान्).

(267) कुमा—(विदूषकहस्ते चित्रपटं दत्वा परिक्रम्य) अये! दण्डकरुच्चैरिव नृपतिः परितपति परमशीतक्किरणः। कुतः—

(268) प्रश्च्योतत्करशीकरेण करिणा संस्पृश्यते वाशिका
स्कन्धे चन्दनशाखिनः फणिपतिर्वेष्टान्तरं चेष्टते।
ध्यानस्थानजुषो मुनेः परिचयादुत्सङ्गशय्यातलं
प्रारब्धप्रचलाहतो मृगशिशुर्निद्रालुरालीयते॥ १०॥

(269) (निष्क्रान्ताः सर्वे)

(270) तृतीयोऽङ्कः

---

(271) चतुर्थोऽङ्कः

(272) (ततः प्रविशति कौम्भकूणविकवेषो वर्द्धमानकः)

(273) वर्द्ध—(कुम्भकूणवं वादयित्वा गायति)

(274) अलिअं रामसरबलं गुहकहाहि कुञ्चगिरिविवरम् ।
तुज्झ विणाअअ मंणे पल्लवरिणए रदणवहो ॥
(अलिकं रामशरबलं गुहकथापि क्रौञ्चगिरिविवरा ।
तव विनायक मन्ये पल्लवाच्छादितः रदनपथः ॥ १ ॥)

(275) (पुनरपि गायति)

(276) वहमाणो रेवइमुहमहुमअणिव्वत्तिअं उदअराअं ।
सामलवसणकलंको सोहइ चंदव्व बलभद्दो ॥
( वहन् रेवतीमुखमधु मदनिर्वर्तितमुदयरागम् ।
श्यामलवसनकलङ्को शभोते चन्द्र इव बलभद्रः ॥ २ ॥

(277) (परिक्रम्य) आणत्तोह्मि अंअमंतगुत्तेण–गच्छ सोम, सूलापाणिसिद्धाअअणं । तहिं गहिदपासुपदवेसं अंअरक्खिदं भणाहि—"मम समीवं आअच्छदु"त्ति । (परिक्रम्यावलोक्य) एदं शूलपाणिसिद्धाअअणं । एदे खु धणेहिं अप्पिदाणं उवहाविसुद्धाणं गहिदवेसंतरं अणुट्ठाणगदाणं अह्मि सुभद्दाणं एक्के दीसंति । (आज्ञप्तोऽस्मि आर्यमन्त्रगुप्तेन–गच्छ सोम्य शूलपाणिसिद्धायतनम् । तत्र गृहीतपाशुपतवेषमार्यरक्षितं भण–'मम समीपमागच्छतु' इति । (—) एतच्छूलपाणिसिद्धायतनम् । एते

खलु धनैरर्चितानामुपधाविशुद्धानां गृहीतवेषान्तरानुष्ठान-गतानामस्माकं स्थानगतानां सुभटानामेके दृश्यन्ते। )

(278) (नेपथ्ये) नमोऽस्तु ते शशाङ्कशेखराय शम्भवे।

(279) वर्द्ध—(कर्णं दत्वा)एसो खु सो भअवसिवभट्टारअपादवं-दणव्वावुदस्स अंअस्स सरओ सुणीअदि। होदु। से संकेदलक्खणस्ससिरिरुक्खस्स पच्छाये पडिवालेमि। (परिक्रामति) (एष खलु भगवच्छिवभट्टारकपादवन्दनव्यापृतस्यार्यस्य स्वरः श्रूयते। भवतु, अस्य सङ्केतलक्षणस्य श्रीवृक्षस्य प्रच्छाये प्रतिपालयामि।)।

(280) (ततः प्रविशति पाशुपतवेष आर्यरक्षितः)

(281) आर्य—नमोऽस्तु ते शशाङ्कशेखराय शम्भवे।

(282) कण्ठे विषं विकटवेष करे करोटि-
मंसे गजाजिनमुरस्युरगं करोषि।
कर्णे करोषि वरुणालयसारगर्भं
लाटीललाटतटसुन्दरमिन्दुखण्डम् ॥ ३ ॥

(283) अपि चेयं जन्मनः प्रभृत्यनपायिनी मे प्रार्थना—

(284) इच्छानुषङ्गकलुषाल्पधियां त्वदीय-
दिव्यस्वरूपसहजान्धविलोचनानाम्।
त्वत्पादयोः स्फुरतु भक्तिरकृत्रिमेयं
जात्यन्तरेऽपि जननीस्तनपायिनां नः ॥४॥

(285) (सप्रदक्षिणं नमस्कारं कृत्वा परिक्रम्य)

(286) मुहूर्तं तावदितः प्राकारमुत्तरेण श्रीवृक्षच्छायामुपसेविष्ये यत्र मां कार्यवन्तो मन्त्रगुप्तपुरुषाः प्रतिपालयन्ति । (तथा करोति).

(287) (उपेत्य) अंग्र, वंदामि । (आर्य, वन्दे).

(288) आर्य—अये ! बर्द्धमानकः । बर्द्धमानक, अपि जानीषे कुञ्जरकानुवर्तिषु कुपितेषु प्रत्यन्तपालेषु तत्प्रतिचिकीर्षया ससैन्ये नगरान्निर्गते चण्डसेनहतके संप्रति स्वामिप्रत्यानयनार्थमात्ययिकदूतो हरिणाश्वः प्रेषितो ननु मन्त्रगुप्तेन ?

(289) वर्द्ध—पेसिदो त्ति एत्तअं मए जाणिदं, ण खु से अभिप्पाओ । (प्रेषित इत्येतावन्मया ज्ञातम्, न खल्वस्याभिप्रायः).

(290) आर्य—अहो ! साधु मन्त्रगुप्त, साधु, यदयमुपधाविशुद्धो गर्भदासः परिपार्श्ववर्त्यपि विक्रियासु न तेऽभिप्रायमधिगच्छति । कुतः किल ते मन्त्रदोषावसरः ? अथवा तुल्यरूपमुभयोरपि धर्मार्थकामयोरनुशासनम् । कुतः—

(291) कुर्वन्ति भृत्या वचनं प्रभूणां
प्रयोजनोद्देशमलक्षयन्तः ।
अत्यर्थमार्याः फलमस्तु मा वा
स्वधर्म इत्येव समाचरन्ति ॥ ५ ॥

(292) वर्द्ध—अंअ, दाणिं (जइ) आअच्छदि सामी णिव्विआरो णं रज्जलाभो। ( आर्य, इदानीं (यदि) आगच्छति स्वामी निर्विकारो ननु राज्यलाभः).

(293) आर्य—कः सन्देहः? पश्य—पूर्वसंनिविष्टैः सागरदत्त-प्रभृतिभिः स्थविरामात्यैः संभूय मन्त्रगुप्तेन देवस्य सुन्दरवर्मणस्तेषां सुकृतानामनुस्मारिता रहसि पौरजान-पदाः। यदि सांप्रतमेष्यति स्वामी शत्रोरेकलोष्टवधमप्या-चरिष्यन्ति; किमङ्गः पुनः स्वामिपादोपसङ्ग्रहणम्।

(294) वर्द्ध—केण कारणेण विरत्ता पकिदिए चंडसेणहदअस्स? ( केन कारणेन विरक्ताः प्रकृतयश्चण्डसेनहतकस्य? )

(295) आर्य—तेनैव शीलापराधेन। पश्य—

(296) कारानिरोधपरिपाण्डुकपोलरेखा-
 कारा निरोधविधुराः प्रकृतीश्चकार।
कारच्चणेन ककुभो वशमानिनाय
 कारस्करः स खलु सम्प्रति पार्थिवेपु ॥६॥

(297) वर्द्ध—तदो तदो कहिं एरिसवंणस्स से राअसिरी? (ततस्ततः कुत्रेदृशवर्णस्यास्य राजश्री?)

(298) आर्य—विस्तृतेयं कथा। समासतस्तु कथयामि—पुरा किल सुन्दरवर्मणा स्वयमविदितस्वभावतया विषतरुरिव पुत्रीकृत-श्चण्डसेनहतकः।

(299) वर्द्ध—तदो तदो । (ततस्ततः).

(300) आर्य—ततः स्वयं मगधकुलं व्यपदिशन्नपि मगधकुल-वैरिभिर्म्लेच्छैर्लिच्छविभिः सह सम्बन्धं कृत्वा लब्धावसरः कुसुमपुरमुपरुद्धवान् ।

(301) वर्द्ध—तदो तदो । (ततस्ततः).

(302) आर्य—ततः संप्रवृत्ते संग्रामे वधपात्रमप्येनं पुत्रीकृतत्वाद्-पहस्तयित्वा लिच्छविकुलमन्तः र्घापितवान् देवः । स हि–

(303) स्वशक्तितः कृतसमरोत्सवो द्विपो
भयादिव त्रिदिवमितः प्रपेदिरे ।
प्रमत्सरस्तदनु च दीप्तविग्रहो
दिवं गतः स्वयमपि तत्र मागधः ॥ ७ ॥

(304) वर्द्ध—हद्धि ! असरिससंगामे उप्पराणो मिच्चू तारिसस्स वि देवस्स ! (हा ! धिक् असदृशसंग्रामे उत्पन्नो मृत्युस्तादृशस्यापि देवस्य !).

(305) आर्य—एवमेतत्, जरया नाम किल व्याधेन भगवानपि पुण्डरीकाक्षो लोकान्तरमुपनीतः ।

(306) वर्द्ध—उप्पराणावसरं दाणिं पुच्छामि—कहं सामिसहिदाणं तुह्माणं तवोवणवासो ?
[उत्पन्नावसरमिदानीं पृच्छामि—कथं स्वामिसहितानां युष्माकं तपोवनवासः ?]

(307) आर्य—एतदपि श्रूयताम्—ततोऽस्माकं जनयितारः स्वामिना सह स्वर्लोकमारूढाः। मातरोऽपि महादेवीभिः सह भगवन्तमाशुशुक्षणिमाश्रिताः। वयमप्यधर्मधरेण स्वामिना समानवयस्कया विनयन्धरया नाम धात्र्या प्रच्छन्नमेव रजन्यामटवीकान्तारमुपनीय वनगजबृंहित-त्रस्तया सद्यो विप्रणाशिताः। पुनरपि यदृच्छयागतैस्ता-पसैर्नीतास्तपोवनमिति पर्यवसिता कथा।

(308) वर्द्धं—एव्वं एव्व अय्य पेक्खिदुकामो अय्यमंतगुत्तो।
(एवमेव आर्य प्रेक्षितुकाम आर्यमन्त्रगुप्तः)

(309) आर्य—गच्छतु भवान्, अहमप्यपराह्णे भिक्षाटनच्छद्मना गत्वा रथकारवेश्मगतं तत्रभवन्तं द्रक्ष्यामि।

(310) (निष्क्रान्तौ)

(311) मिश्रविष्कम्भकः

(312) (ततः प्रविशति सखङ्गः सोष्णीषो मन्त्रगुप्तः)

(313) मन्त्र—साधु भोः, मम खलु तावत् स्वामिकार्यपर्याकुल-हृदयत्वादविदितनक्तन्दिनविशेषो गतः कालः। सम्प्रति पुनः—

(314) गुणविप्लवशङ्किधिया नीतिः समुपनतसाहसावसरा ।
भृशतरमाकुलयति मामियमिव रङ्गोन्मुखी वाक्छ्रीः ॥८॥

(315) (विलोक्य) अये ! पर्यवसितो दिवसः । अहो नु खलु ! नित्यप्रमुदितनरनारीसहस्रसंकुलस्य कुसुमपुरस्य सायन्तनी श्रीः । इह हि---

(316) त्यक्तो मानस्तरुण्या प्रणयकुपितया किं फलं शष्कुलीभिः
सैरन्ध्रीप्राप्तवेषा स्मितरुचिरमुखी स्वैरमास्ते पुरन्ध्री ।
स्नाताः स्नानीयचूर्णग्रहणसुरभयः सुभ्रवो बभ्रुवर्णाः
शारीकुर्वन्ति सन्ध्यां प्रचलकुवलयाक्षेपनीलैः कटाक्षैः ॥९॥

(317) अपि च----

(318) आशाकेशान्तधूपैरिव गगनतलं व्याप्तमासीत्तमोभि-
र्धूमव्याजेन दीपास्तिमिरमिव मुहुः पीतमेते वमन्ति ।
किञ्चान्यत् प्रस्थितानां प्रियतमवसतिं नक्तमेकाकिनीनां
श्रूयन्ते राजमार्गे कलकलमुखरा मेखलाः सुन्दरीणाम् ॥१०॥

(319) अस्यां किल रजन्यामेष्यति स्वामी । साधु भोः----

(320) भूत्वा प्रच्छन्नमन्तर्बहिरपि च मया मण्डलं साधयित्वा
निःशेषं नीतिमार्गप्रणिहितमनसा वञ्चितश्चण्डसेनः ।
स्वामी कुर्यात् प्रतापं निकृतिमति रिपौ विप्रलम्भोः न दोषो
मायामोहेन दैत्येष्वपथमुपगतेष्वाददे वज्रमिन्द्रः ॥११॥

(321) (ततः प्रविशति सान्नाहिकवेषः सखड्गो वीरसेनः)

(322) वीर----प्राप्तोऽस्मि चिरादहमिदानीं कुसुमपुरम् । (निःश्वस्य)

(323) कालापकर्षे सति भङ्गुरत्वात्
प्रक्षीणसंस्कारभुवां स्मृतीनाम् ।
स्फुरन्ति मे शैशवचेष्ठितानि
जातिस्मरस्येव भवान्तराणि ॥१२॥

(324) (परिक्रम्य) अहो नु खलु टङ्कच्छेदैरन्धकारपटलैर्निरन्तर-निचितानीव दिगन्तराणि । तथा हि----

(325) बिभर्ति रथ्या रणधूलिधूम्रं
वान्तं विघट्टाभिरिवान्धकारम् ।
तिर्यक्प्रवृत्तं नगनिम्नगाभ्यः
कलिन्दकन्येव पयःप्रवाहम् ॥१३॥

(326) भवतु, बाल्याभ्यस्तेन वर्त्मना रथकारवेश्मगतं तत्रभवन्तं मन्त्रगुप्तं पश्यामि । (परिक्रम्य) इदं तद्रथकारभवनम् । हन्त ! अङ्गुलिस्फोटेन संज्ञामवघाट्य । निष्क्रान्तः ।

(327) वीर----(उपेत्य) वर्द्धतां वर्द्धतां भवान् ।

(328) मन्त्र----(सकुतूहलम्) अये ! वीरसेनः । (करं करेणाव-लम्बते) उपविशतु भवान् । (शयनार्द्धं दर्शयति)

(329) वीर—(भूमावुपविशति)

(330) मन्त्र—क्वेदानीं वर्तते स्वामी ?

(331) वीर—मार्गे ।

(332) मन्त्र—अप्यस्यामेवरजन्यां कुसुमपुरमेष्यति स्वामी ?

(333) वीर—आर्य, प्रभाते ।

(334) मन्त्र—एवं भोः । अथ कियानिय परिपार्श्ववर्ती सेना-
वयवः ?

(335) वीर—शतमात्रन्दाशेरकवलम् । नन्दकप्रभृतयो दौवारिकाः । येऽपि त्वया सह कुसमपुरमप्राप्तास्तेऽपि । समवयसोऽपि । सकलवलसन्दोहसनाथः कुञ्जरकसेनापतिः ।

(336) मन्त्र—साधु कुञ्जरक साधु,

(337) सुहृदामनपायि सौहृदं
विजयत्वेऽपि कुलक्रमागतम् ।
ननु दाशरथिप्रयोजने
प्रियमायुः क्षपितं जटायुषा ॥१४॥

(338) अथ प्रतिनिवृत्तायां (राजदुहितरि) विरहातुरः स्वामी कथमिव सन्नाहं प्रतिपद्येत ?

(339) वीर—यदहरेव प्रतिनिवृत्ता सा राजदारिका तदहरेव त्वत्सकाशादात्ययिकदूतो हरिणाश्वः प्राद्दश्यत।

(340) मन्त्र—ततस्ततः।

(341) वीर — चिरप्रधारितलब्धावसरविजृम्भमाणरोषामर्षवशवर्तितः क्षणप्रणष्टकान्तावियोगस्वरः प्रतिपक्षमुपेक्षमाणः सन्नाहमेव प्रत्यपद्यत स्वामी।

(342) मन्त्र—सदृशमिदं क्षात्रस्य तेजसः। पश्य—

(343) त्यक्तं तया कुपितवह्निपरीतमन्त-
　　　र्धाम स्वमेव हृदयं नरदेवसूनोः।
मध्यन्दिनार्ककिरणोष्णमपाकरोति
　　　किं वारि पद्मसरसोऽपि न राजहंसी॥१५॥

(344) अथ न कदाचिदपि सा नः स्वामिनः स्मृतिपथमागता ?

(345) वीर—अथ कदाचित् पथि परिणमित पश्चिमाशावलम्बिनि सूर्यबिम्बे परिवृत्तासु तरुच्छायासु मन्दमन्दसञ्चारिणि सायन्तने नभस्वति वैखानसोत्सङ्गनिवेशितोत्तमाङ्गो मदङ्कविन्यस्तपदारविन्दः पल्लवशयनगतः स्वामी तां देवीमनुस्मृत्य बहुप्रलपितवान् सः—

(346) इति कृतमिति चोक्तं चेष्टितान्येवमास-
न्निति नियतमवाप्ता मामनुस्मृत्य शोकम् ।
विरहमसहमाना चक्रवाकीव बाला
नयनसलिलधारादुर्दिनासु क्षपासु ॥१६॥

(347) इत्येवमादि ।

(348) मन्त्र—राजशासनात् प्रतिनिवृत्तायां राजदारिकायां कीदृशेन सन्देशेन स्वामिनमाप्याय्य प्रस्थिता योगसिद्धिः ?

(349) वीर—'पूर्वमपि मदायत्तोऽयमर्थः, पश्चादप्येवमेव' इत्येतावतैव । अतः परमिह भवानेव प्रमाणम् ।

(350) मन्त्र—मयापि पुरोहितसूनुरार्यरक्षितो मथुरां प्रेषितः—यदाह भगवती योगसिद्धिस्तत् प्रतिवक्तव्यम्—इति ।

(351) वीर—अपि सुखेन पच्यते प्रयोजनसिद्धिः ?

(352) मन्त्र—तथैव प्रयतिष्यते भगवती यथा स्वयमेव स्वां दुहितरमस्मत्स्वामिने प्रतिपादयिष्यति मथुरेश्वरः । तदहमप्यतर्कितोपनतेन प्रियासमागमोत्सवेन प्रतिपन्नराज्याभिषेकमस्मत्स्वामिनमाराधयामि । पश्य—

(353) सङ्गतिश्चिरमचिन्तितपूर्वा
निर्वृतिप्रणयिनी मिथुनानाम् ।
आधिराज्यमधिरोहति तस्याः
षोडशीमपि कलां न मघोनः ॥१७॥

(354) (नेपथ्ये महान् कलकलः)

(355) उर्मी—अये ! शब्द इव ।

(356) (पुनरपि नेपथ्ये)

(357) भो भोः पाटलिपुत्रवासिनः पौराः, शृण्वन्तु भवन्तः—

(358) श्रीमद्भिः सचिवसतैः समन्वितोऽसौ
लक्ष्मीवानुडुनिवहैरिवोडुराजः ।
प्रह्वानां नयनमहोत्सवः प्रजानां
सम्प्राप्तो मगधकुलांकुरः कुमारः ॥१८॥

(359) मन्त्र—(सहसोत्थाय)

(360) जयति प्रथमं विजया जयन्ति देवाः स्वयं महादेवः ।
श्रीमन्तौ भगवन्तावनन्तनारायणौ जयतः ॥१९॥

(361) कोऽत्र भोः । (प्रविशति चेटः)

(362) चेटः—अंअ, अअं ह्मि संगदओ । (आर्य, अयमस्मि सङ्गतकः)

(363) मन्त्र—सौम्य, त्वरिततरमितो गत्वा शूलपाणिसिद्धायतन-संज्ञापटहमाहत्याघोषय—सम्प्रति कृतराजकार्या वयम् । अतः परं महाहवेन भवितव्यम् । तदायुध-जीविनां कालः कर्मकराणाम्—इति ।

(364) चेट—जं अंओ आणवेदि । ( निष्क्रान्तः ) ( यदार्य आज्ञापयति )

(365) (उभौ परिक्रामतः)

(366) वीर—अये ! परिवृत्ता रजनी ।

(367) तरुणारुणरश्मिताडितं
निचितं पश्चिमसागरोपरि ।
तिमिरं परिदृश्यते यथा
स्थितमौर्वानलधूममण्डलम् ॥२०॥

(368) मन्त्र—अये ! समुत्थितो दिवसः । पश्य—

(369) दीर्घैर्दिगन्तविटपेषु करैरसंख्यै-
र्नक्षत्रपुष्पतरलेषु नभोद्रुमस्य ।
स्नातोत्थितो जलनिधेरयमंशुमाली
सन्ध्यार्चनाय कुसुमापचयं करोति ॥२१॥

(370) (निष्क्रान्ताः सर्वे)

(371) चतुर्थोऽङ्कः

(372) पञ्चमोऽङ्कः

---

(373) (ततः प्रविशति लोकादित्यः)

(374) लोका—दिष्ट्येदानीं प्रतिलब्धराज्याभिषेको देवः कल्याणवर्मा ! दिष्ट्या वत्सानुबन्धो निहतश्चण्डसेनहतकः ! कुतः—

(375) प्रकटितवर्णाश्रमपथमुन्मूलितचण्डसेनराजकुलम् ।
कल्पन(?)मिव नमति जनः (सकलः) कल्याणवर्माणम् ॥१॥

(376) (परिक्रम्य) अहो तु खलु विटजनाभ्यर्चितकर्णीपुत्रकीर्तिस्तम्भालङ्कृतराजमार्गस्य कुसुमपुरवेशस्य परा श्रीः । इह हि—

(377) वारस्त्रीव्यतिकरपेशलं समाजं
व्याकोशीकृतलटहं विटोत्तमानाम् ।
गोष्ठीषु प्रमुदितवेषतो महोच्चा
हुङ्कारध्वनिमुखरान्विडम्बयन्ति ॥२॥

(378) अये ! अयं पुराणविटो वेशरक्षितः । शान्तनवमिव शरतल्पगतं वेशवाटमकरकेतुमन्दिरावसन्नमेनं पश्यामि ।

कुतः—

(379) साकेतेऽकृतकौतुको विकलितः काञ्चीपुरे काञ्चिभिः
पम्पायामभिसारितः परिजनैर्विज्ञापितो वैदिशे ।
गोत्रेषु स्खलितः कटाहनगरे यः कुण्डिने म (मु) ण्डितो
वेशस्त्रीनिकषोपलश्चिरतरं भूत्वैव निष्ठां गतः ॥ ३ ॥

(380) (ततः प्रविशति वेशरक्षितः)

(381) वेश—(निश्वस्य:) अहो ! कृतान्तहतक, धिक् त्वामसदृशसंयोगकारिणम् । पश्य—

(382) पौरस्त्यैर्यमिनां धातः पाश्चात्यैश्च विलासिनाम् ।
व्यत्ययो न त्वया दृष्टो वयोभिरितरेतरम् ॥ ४ ॥

(383) लोका—(उपेत्य) भाव, किमेकाग्रेण चेतसा चिन्तयसि ?

(384) वेश—अये ! लोकाक्षिरक्तदासः ।

(385) यत्प्राभृतं रहसि वेशविलासिनीनां
गोष्ठीषु यानि फणितानि सुहृज्जनानाम् ।
सान्द्रे निशातमसि यानि च साहसानि
तान्येव यौवनसुखानि विचिन्तयामि ॥ ५ ॥

(386) लोका—पर्यन्तपरिहरणीयानाहुर्विषयान्, विशेषतस्तु वेशवासः । पश्य—

(387) दातारं करणप्रयोगनिपुणं मन्दस्मिताभाषिणं
सम्पन्नं नवयौवनं प्रणयिनं रूपेण शीलाधिकम् ।
बन्धक्या पुरुषप्रकाण्डमुचितं त्यक्त्वा परम्प्राकृतः
कृच्छ्रग्रन्थिरवन्तिसापविभवोऽप्युत्तालमुद्गीयते ॥६॥

(388) वेश—धिक् ! भवन्तं श्रोत्रियमार्गानुसारिणम् । पर्यन्त्य-परितापनात्किल ते विरक्ता विषयेषु । तत्र पुनस्तत्रभवतां प्रज्ञापराधः । पश्य—

(389) वेशे दत्तकसूत्रपाठनपरस्त्रीसूत्रमानास्पदे
स्वैरस्त्रैर्विनयानुकूलगतिभिर्नीत्वा वयो मध्यमम् ।
स्थाविर्ये तदनुस्मृतिप्रतिनिधिन्यायेन किं नेष्यते
तत्त्वं न प्रतिपद्यते किमु विटस्त्रैविद्यवृद्धो जनः ॥७॥

(390) छिद्यतामियं कथा । सौम्य, चिराद्दृश्यसे । कुतः ? कथय ।

(391) लोका—कुतश्चित् कारणादितः शूरसेनमथुरां गत्वा प्रति-निवृत्तोऽस्मि ।

(392) वेश—अस्त्यपूर्वा शौरसेनी कथा ?

(393) लोका—अस्ति; यदुनाथः स्वां दुहितरं कीर्तिमतीमस्म-त्स्वामिने देवाय कल्याणवर्मणे प्रतिपादयितुं व्यवसितः ।

(394) वेश—द्वे अप्येते राजकुले परस्परेण समवायमर्हतः । कः

पुनरिदानीमुपोद्धातः ?

(395) लोका—भगवत्येव विन्ध्यवासिनी ।

(396) वेश—कुलदैवतं हि यदूनामेकानङ्गा । ततस्ततः ।

(397) लोका—अस्ति कीर्तिषेणराजकुले परमसम्मता योगसिद्धिर्नाम परिव्राजिका । सा कदाचिद्रहसि देव्या सह जामातृविशेषमन्तरेण चिन्तयन्तं राजानमेकेन चित्रपटेनोपस्थितवती । तत्र किल चित्रपटे कीर्तिमतीकल्याणवर्मणोः प्रतिकृतिद्वयमालिखितमासीत् । ततः किमेतदिति पृष्ठा सती भगवती चित्रगतेयं मिथुनकल्पना प्रतिपत्तव्येत्येकानङ्गानुशासनमाख्यातवती ।

(398) वेश—कथमेतत् ? कथं कथितो भवान्या ?

(399) लोका—श्रूयताम्—सम्प्राप्तायां तस्यां किल रजन्यां—

(400) भसितधवलमूर्तिराविरासीत्
कमलविलोचनविभ्रमा भवानी ।
कलमकणिशकान्तमुद्वहन्ती
शशिशकलाभरणं कपर्दभारम् ॥ ८ ॥

(401) ततः सा—

(402) शौनकमिव बन्धुमती कुमारमविमारकं कुरङ्गीव ।
अर्हति कीर्तिमतीयं कान्तं कल्याणवर्माणम् ॥ ९ ॥

(403) इत्येनामार्यां पठित्वा चित्रपटं दत्त्वा झटिति तिरोभूता । यः स चित्रपटः स्वहस्ते गृहीतः स परिव्राजिकायाः प्रतिबोधेऽपि हस्ते दृष्टः ।

(404) वेश—प्रसन्ना भगवती । बह्वाश्चर्याणि दैवतानि! ततस्ततः।

(405) लोका— ततस्तस्यामवस्थायामस्मत्स्वामिपुरोहितसूनुरार्यरक्षितः कन्यावरणार्थं राजकुलं प्राप्तवान् । ततो मन्त्रिभिः सह सम्भूय दैवनिर्मितमेतदिति कृतबुद्धिरासीद्यदुनाथः ।

(406) वेश—अहो ! सञ्चारिण्यभ्युदयपरम्परा देवस्य कल्याणवर्मणः ।

(407) ( नेपथ्ये )

(408) भोः कुसुमपुरवासिनः पौराः, शृण्वन्तु शृण्वन्तु भवन्तो मन्त्रिमहत्तरस्य मन्त्रगुप्तस्य वचनम्—नित्योत्सवेऽपि कुसुमपुरे महोत्सवः समादिश्यते । कुतः—

(409) प्रासादशृङ्गमधिरुह्य दिदृक्षतेऽसौ
हर्षोत्सवप्रमुदितं नगरं नरेन्द्रः ।
उज्जृम्भमाणमुदधिं समुदीयमानः
पूर्वाचलेन्द्रशिखरादिव पूर्णचन्द्रः ॥१०॥

(410) लोका—राज्यलाभसभाजनव्यपदेशेन शूरसेनसचिवेषु राजदुहितरमादाय प्राप्तेषु शङ्के समादिष्टोऽयमुत्सवः । तदहमपि महोत्सवं द्रक्ष्यामि ।

(411) वेश—साधयतु भवान् । (निष्क्रान्तौ)

(412) विष्कम्भकः

(413) (ततः प्रविशति परिव्राजिका)

(414) परि—साधु भोः साहं मन्त्रगुप्तमार्गानुसारिणी प्रकृतिरिव पुरुषाधिष्ठिता कल्याणवर्माभ्युदयमेवं निरवर्तयम् । कुतः—

(415) यदयं नृपसूनवे नृपः स्वयमेव स्वसुतां प्रयच्छति ।

(416) (विमृश्य)

(417) अथ वैष भवेदनुग्रहो भगवत्या मम सा प्रसीदतु ॥११॥

(418) कृतकल्यस्य राज्ञो विप्रलम्भः कृत इति किंचिदिव मे हृदयस्यापरितोषः ।

(419) अथवानुगुणेन तत्सुतां घटयन्त्या मगधेन्द्रसूनुना ।
यदुवंशविवृद्धये मया छलयन्त्यापि नृपो न वञ्चितः ॥१२॥

(420) निपुणिकया सह विविक्तरूपे प्रमदवने वत्सा कीर्तिमती ।

प्रथमं तावन्महाराजवचनात् समाजनीयो मगधेश्वरः, पश्चात् कुमारी पुरोधसा । यावदहमपि मन्त्रगुप्तं पश्यामि । (निष्क्रान्ता)

(421) (ततः प्रविशति राजा विदूषकश्च)

(422) राजा—(निःश्वस्य)

(423) प्राप्तं पाटलिपुत्रमेव नगरं नम्रा मुहुः पार्थिवाः
सेना सिन्धुविडम्बिनी परिणता सिद्धं च सिंहासनम् ।
श्लाघ्यं मध्यमलोकपालककुदच्छत्रं च मे धार्यते
तामप्राप्य नृपात्मजां परिकरः सर्वोऽयमाडम्बरः ॥१३॥

(424) विदू—भो वअस्स, मा संतप्पाहि; अत्थि आसावसरो; बहुएहिं उवाअणेहिं सूरसेणणाहपुरोहिदो भवंतं उवतिट्ठदि। (भो वयस्य, मा सन्तप्य; अस्त्याशावसरः; बहुभिरुपायनैः शूरसेननाथपुरोहितो भवन्तमुपतिष्ठते)

(425) राजा—इदं किलशास्पदम् ! अस्मत्पितुः पुरा परं मित्रं शूरसेननाथः । स इदानिं प्रतिलब्धराज्यं मां निशम्य सभाजयितुं पुरोधसं प्रेषितवानिति यावत् ।

(426) (प्रविश्य दौवारिकः)

(427) दौवा—जेदु महाराओ । एसो सूरसेणणाहपुरोहिदो पडि-

हारे चिट्ठादि ।

(जयतु महाराजः । शूरसेननाथपुरोहितः प्रतीहारे तिष्ठति)

(428) राजा—अविलम्बितं प्रवेशयैनम् ।

(429) दौवा—जं भट्टा आणवेदि । (यद्भर्ता आज्ञापयति) (निष्क्रान्तः).

(430) ( ततः प्रविशति पुरोहितो दौवारिकश्च )

(431) पुरो—(स्वगतम्) राजानं समाजयित्वा पश्चान्मन्त्रगुप्तेन योगसिद्धया च सह कुमारीमन्तरेण सर्वं समर्थयिष्यामि । साधु भोः—

(432) प्राप्त इव साधुवादं समगुणघटनानिबन्धनं धाता ।
तामपि तेन नृपसुतां स्रुचमिव साम्ना समानयति ॥१४॥

(433) दौवा—इदो इदो अंज्जो (इत इत आर्यः) (उभौ परिक्रामतः)

(434) विदू—अच्चाहिदं एदं तत्तहोदीए विरहविहुरं चित्तं; ण कज्जेण किंचि किलंमदि दे हिअअं । (अत्याहितमेतत् तत्रभवत्या विरहविधुरं चित्तम् । न कार्येण किञ्चित् क्लाम्यति ते हृदयम्)

(435) राजा—अतिमुग्धमभिहितम् । पश्य —

(436) गिरिमिव दुर्वहरूपं वियोगदुःखं वहामि कान्तायाः ।
ममकिल तस्यापि सखे कन्दुकलघु राज्यमतिभारम् ॥१५॥

(437) पुरो—(उपेत्य) वर्द्धतां देवः ।

(438) मौलीन्दुखण्डगलितैरमृतप्रवाहै-
रा रैवतीयकुसुमासवसेकसिक्तैः ।
गौरीरतिश्रमविनोदविधानशेषैः
शम्भुश्चिरं तव करोतु महाभिषेकम् ॥१६॥

(439) राजा—आसनमत्रभवतः ।

(440) दौवा—एदं आसणं, उवविसदु अज्जो । (एतदासनम्, उपविशत्वार्यः ।)

(441) पुरो—उपविशतु देवः । (उभावुपविशतः)

(442) राजा—अपि कुशली शूरसेनेश्वरः ?

(443) पुरो—कुशली कीर्तिषेण इह भवन्तमनामयं पृच्छति । मय्यस्य सन्देशो वर्तते ।

(444) राजा—यदाज्ञापयति प्रभुः ?

(445) पुरो—त्वामाह कीर्तिषेण—वत्स कल्याणवर्मन्,

(446) राज्ञी सुपुत्रा मगधेन्द्रपत्नी
श्वःश्रेयसं तेऽस्तु चिराय जीव।
दिष्ट्या पुनः पुष्पपुरे सुगाङ्गं
प्रासादमध्यासितवान् कुमारः ॥१७॥

(447) पुनरप्याह—

(448) अलङ्कर्तुमलं मन्ये द्वयोर्वक्षःस्थलद्वयम्।
शार्ङ्गिणः कौस्तुभं-रत्नं-हारः -कल्याणवर्मणः ॥१८॥

(449) इति हारमिमं प्रेषितवानिह भवते। (विदूषकस्य हस्ते हार-मर्पयति)

(450) विदू—(अपवार्य) एसो हारो, पेक्खदु पेक्खदु भवं। (—)
(एष-हारः, प्रेक्षतां भवान्).

(451) राजा—(सकुतूहलं हारं पश्यति)

(452) पुरो—देवस्य सकुतूहला दृष्टिः शूरसेनराजकुलसर्वस्वमिदं हाररत्नम्। अस्ति वा हारावतरणश्रवणे कुतूहलम्?

(453) राजा—कुतूहलिनो वयम्।

(454) पुरो—श्रोतुमर्हति देवः। तदा खलु महाभारतसाम्पराये वर्तमाने—

(455) मध्यं दक्षिणमस्यतः प्रशमितो यः सुप्रतीकः शरै-
श्चक्रव्यूहपृथक्प्रभेदघटनाशौण्डस्य गाण्डीविनः ।
हारः कुम्भसमुद्भवैर्विरचितस्तारागणस्पर्द्धिभिः
प्रत्यादिष्टहराट्टहासशकलैस्तस्यैप मुक्ताफलैः ॥१६॥

(456) राजा—अहो ! नु खलु वीरजनस्पृहणीयोऽयमपूर्वो रत्नहारः ।

(457) पुरो—ततः—वार्ष्णेयीकुचतटकुङ्कुमाभिताम्रैः
प्रत्यग्रक्षतिभिरिवोपलक्ष्यमाणैः ।
संघृष्टः कपटकिरातशस्त्रमार्गै-
र्बीभत्सोरपि भुजमध्यमध्यवासीत् ॥२०॥

(458) राजा उत्पत्यानुरूपो विनियोगः । ततस्ततः ।

(459) पुरो—ततस्तथाभूतेषु वृष्णिषु सागरग्रस्तायां द्वारवत्यां प्रतिष्ठापितपरीक्षितः प्रव्रजितुकामस्य राजर्षेर्युधिष्ठिरस्यादे-शाद्धनञ्जयेन शूरसेनेषु [पश्चा] भिधानंवृष्णिकुमारं प्रतिष्ठा-पयता हारालङ्कारो दत्तः । तत्परम्परया कीर्तिषेणं प्राप्तः । भद्रं तव ।

(460) राजा—(पर्यश्रुनयनो हारं निरीक्षते)

(461) पुरो—कथं हारदर्शनात् पर्यश्रुनयनो देवः संवृत्तः ?

(462) विदू—पुण्णसुलोआणं आअमीढाणं संकित्तणे कस्स ण होइ अस्सुणिवाओ ? का कहा तेहिं धारिअअपुव्वाभरणदं-सणेण ?

(पुण्यश्लोकानामाजमीढानां सङ्कीर्तने कस्य न भवति अश्रुपातः ? का कथा तैर्द्धारितापूर्वाभरणदर्शनेन ?)

(463) पुरो—भजमानमभिहितम् ।

(464) राजा—आचार्य, विश्राम्यताम् । नन्दक, मद्वचनादुच्यतां मन्त्रगुप्तः—विश्रान्तसुखिनमार्यं द्रष्टास्मि ।

(465) नन्द—जं महालाओ आणवेदि । (यन्महाराज आज्ञा-पयति]

(466) पुरो—यदभिलषितं देवस्य । [नन्दकेन सह निष्क्रान्तः]

(467) विदू—किंदाणीं मुब्विअं ? [किमीदानीं मोहितम् ?]

(468) राजा—[हारमुरसि निधाय] सखे, हारदर्शनात् पुनर्नवी-भूतो मे मदनः । पश्य—

(469) स कालः सकलो नूनं गतोऽपि पुनरागतः ।
मया मायेव सम्प्राप्ता सा यदा यादवी सुता ॥२१॥

(470) क नु खलु पर्युत्सुकमात्मानं विनोदयामि ?

(471) विदू—भोअणसालं गच्छामो, आदु महाणसम् ?
(भोजनशालां गच्छावः, उत महानसम् ?)

(472) राजा—मुक्तः परिहासः ।

(473) नाभीवापीप्रविष्टः स्तनशिखरगतो रोमरेखापदेन
प्रत्युत्पन्नप्रतापः स्फुरदधरमणिव्याजनीराजनेन ।
लब्धो लीलाकटाक्षैर्मनसिजकलभो वर्तते दुर्निवारो
देव्या लब्धप्रसादः कलमणिरशनाडिण्डिमारोहणेन ॥२२॥

(474) अपि च—

(475) कान्तावियोगज्वलनाभितप्ते
चित्ते मदीये हरबद्धवैरः ।
दाहक्षमं कर्तुमिवात्मदेहं
दाहाभियोगं मदनो विधत्ते ॥२३॥

(476) विदू—होदु, पमदवणं एव्व पविसामो। (भवतु, प्रमदवन-
मेव प्रविशावः)

(477) राजा—अग्रतो भव । (उभौ परिक्रामतः)

(478) विदू—पत्ता ह्य पमदवणं, विणोदेहि अत्ताणं ।
(प्राप्तौ स्वः प्रमदवनम्, विनोदयात्मानम्)

(479) राजा—सखे, अतिक्रान्तचिकित्सः परोक्षो मदनातङ्कः ।
पश्य—

(480) पार्श्वस्थेव पुरः स्थितेव दिवसे रात्रौ च सर्वात्मना ।
सङ्कल्पेन यथा पुरः प्रियतमा सैवेयमालक्ष्यते ।
रम्यद्वेषनिबन्धनो मनसि मे कष्टं वियोगोचितः
सन्तापोऽप्युपचीयते भगवतो धातुर्विचित्रा गतिः ॥२४॥

(481) विदू—एदं गिह्मकालसुभअपुल्लमल्लिआकुसुमट्टहासं लआ-
घरं पविसामो । (एतद्ग्रीष्मकालसुभगफुल्लमल्लिका-
कुसुमाट्टहासं लतागृहं प्रविशावः)

(482) राजा—तथास्तु । (उभौ प्रविशतः)

(483) भोः कृतान्तहतक, धिक् त्वामसदृशसंयोगकारिणम् ।
कुतः—

(484) या रात्रिर्विरहाभिषङ्गविषमा द्राघीयसी वर्तते ।
या वा सङ्गमहोत्सवप्रणयिनो क्षिप्रं क्षपा क्षीयते ।
व्यत्यासेन यदि त्वयेदमुभयं धातः कृतं तावता
लब्धाश्वासमुपप्लवेऽपि मिथुनं न त्वामुपक्रोशति ॥२५॥

(485) (चिन्तापरः शिलातले समुपविष्टः) (ततः प्रविशति कीर्ति-
मती निपुणिका च)

(486) निपु—भट्टिदारिए, एसो भट्टा, पेक्खदु पेक्खदु भट्टिदारिआ।
(भर्तृदारिके, एष भर्ता, प्रेक्षतां प्रेक्षतां भर्तृदारिका)

(487) कीर्ति—अंअउत्तो ! (आर्यपुत्रः) !

(488) निपु—(चित्रपटं दर्शयति)

(489) कीर्ति—(निरीक्ष्य साश्रुयम्परावर्तते)

(490) निपु—किं एदं ? (किमिदम् ?)

(491) कीर्ति—हला, दुज्जणो एसो जणो। एत्तिअं कालं विरह-विहुरं इमं जणं विसुमरिअ अण्णाए सह रममाणो दीसइ। हला, दुर्जन एष जनः। एतावन्तं कालं विरहविधुरमिमं जनं विस्मृत्यान्यया सह रममाणो दृश्यते)

(492) निपु—(आत्मगतम्) हुं ! सुमरणावट्टिअहिअअदाएचित्त गदं भट्टारं परमत्थं जाणिअ अत्तपडिकिदिदंसणजणिअ-अण्णावहूविब्भमा भट्टिदारिआ। (प्रकाशम्) अत्तणो पडि-किदीए वंचिदासि। (—) (स्मरणावर्तितहृदयतया चित्रगतं भर्तारं परमार्थं ज्ञात्वा आत्मप्रतिकृतिदर्शनजनितान्यवधू-विभ्रमा भर्तृदारिका। (—) आत्मनः प्रतिकृत्या वञ्चितासि)

(493) कीर्ति—हद्धि ! अवरद्धा ह्मि। (सव्रीडा तिष्ठति)
(हा धिक् ! अपराद्धास्मि।) (—)

(494) निपु—पेक्खदु पेक्खदु भट्टिदारिआ भट्टारं। (प्रेक्षतां प्रेक्षतां भर्तृदारिका भर्तारम्)

(495) कीर्ति—हला, कहिं उपविसिअ विस्सद्धा अंअउत्तसारिक्खदंसणेण दिट्ठिं तोसेमि ? (हला, कुत्रोपविश्य विस्रब्धा आर्यपुत्रसादृश्यदर्शनेन दृष्टिं तोषयामि ?)

(496) निपु—एदं अग्गदो लआघरं, तहिं पविसामो। (परिक्रामतः) (इदमग्रतो लतागृहम्, तत्र पविशावः) (—)

(497) विदू—किं तत्तहोदा चिंतीअदि ?) (किमत्रभवता चिन्त्यते ?

(498) निपु—भट्टिदारिए, लआघरब्भन्तरे अंअवेखाणसस्स विअ सरो सुणीअदि। लआविडपंतरेण पेक्खामो। (भर्तृदारिके, लतागृहाभ्यन्तरे आर्यवैखानसस्येव स्वरः श्रूयते। लताविटपान्तरेण प्रेक्षावहि)

(499) कीर्ति—एव्वं होदु। (तथा कुरुतः) एवं भवतु (—)

(500) निपु—अंहो भट्टा ! (अहो भर्ता !)

(501) कीर्ति—ण हू अंअउत्तो, णाहं अस्स समीवे चिट्ठामि। (न खलु भर्ता, नाहमस्य समीपं तिष्ठामि (परावितिंतुमारभते।)

(502) निपु—णं राअणेपच्छदंसणेणा विप्पलद्धासि।
(ननु राजनेपथ्यदर्शनेन विप्रलब्धासि)

(503) कीर्ति—उंमत्तिए, कहं सो पुण्णमसीचंदं लज्जावअंत महाराओ ? (उन्मत्तिके, कथं स पौर्णमासीचन्द्रं लज्जापयन्महाराजः ?)

(504) निपु—तु ह विरहोव्वग्गसरीरस्स भट्टिणो पच्चूपचंदसरिसी मुहसिरी तस्स; पुण अस्सं समीवे अंअवेस्वाणसो मंतेदि। (तव विरहोद्विग्नशरीरस्य भर्तुः प्रत्यूपचन्द्रसदृशी मुखश्रीस्तस्य, पुनरस्य समीपे आर्यवैखानसो मन्त्रयते)

(505) विदू—एक्को जंबुको विअ कोसुंतो सोहइ, ता पडिवअणं देहि। (एको जम्बुक इव क्रोशन् न शोभते, तत् प्रतिवचनं देहि)

(506) राजा—सखे, वैखानस,

(507) कीर्ति—हु ! अंअउत्तो, हला, अग्गदो होहि।
(हु ! आर्यपुत्रः, हला, अग्रतो भव)

(508) निपु—भट्टिदारिए, कीस मए वारणं अंणेसअदि ? णं तुए एव्व सव्वंगीणो आमुत्तो रोमंचकंचुओ। (भर्तृदारिके, कीदृङमया वारणमन्विष्यते ? ननु त्वयैवसर्वाङ्गीण आमुक्तो रोमाञ्चकञ्चुकः)

(509) कीर्ति—हला किं मं लज्जावेसि? (हला किं मां लज्जापयसि?)

(510) राजा—प्रियायाः प्रथमसमागममेव चिन्तयामि—

(511) पातुं पद्मसुगन्धि लोलनयनं गेमाश्रितं गण्डयो-
यद्विद्रुमपाटलाधरपुटं वक्त्रं मयोन्नामितम् ।
वैलक्ष्यप्रतिषेधविक्लवगिरा तन्व्या तया मुग्धया
पश्चात्ताम्ररुचा करेण मम तु प्रच्छादिते लोचने ॥२६॥

(512) अपि च तदानीमेव कदाचित्––

(513) दृष्ट्वासन्ने मयि तु सहसा स्वां वधूं वञ्चयित्वा
लौल्यात् पीत्वा कमलमधुपं कामपि प्रार्थयन्तम् ।
ध्यात्वा दूये सजलनयनं भङ्गुरभ्रूपताकं
प्रेमार्द्रं यत्प्रणयकुपितं कोपनायाः प्रियायाः ॥२७॥

(514) वअस्स, एक्कं राअकज्जं मंतेमि ।
(वयस्य, एकं राजकार्यं मन्त्रयामि)

(515) राजा––छन्दतः ।

(516) विदू––दाणिं पत्तरज्जाणं-अह्लअपिच्छिअचिट्ठंताणं किं तेण अदिक्कंतेण इत्थिआवुत्तंतेण ? (इदानीं प्राप्तराज्यानां अशित्वा-पीत्वा-तिष्ठतां। किं तेनातिक्रान्तेन स्त्रीवृत्तान्तेन ?)

(517) राजा––धिग्वैधेयम् ।

(518) निपु––अवेहि दुट्ठवडुअ, जदा तुवं राआ तदा एदं

राअकज्जम् । (अपेहि दुष्टवटुक, यदा एवं राजा नदेदं राजकार्यम् )

(519) कीर्ति—(स्मितं करोति)

(520) राजा—अयि प्रिये—

(521) चेतस्त्वया सहितमेव तथापि नेदं
चक्षुः कृतार्थमिति केवलमातुरं मे ।
आवल्गिते वरतनु स्वजने जनानां
प्राप्ते मनोरथशतेऽपि कुतः प्रमोदः ॥२८॥

(522) निपु—भट्टिदारिए, अदिकरुणं भट्टा मन्तेदि ।
(भर्तृदारिके, अतिकरुणं भर्ता मन्त्रयते)

(523) कीर्ति—णत्थि मे वअणावअरो। (नास्ति मे वचनावसरः)

(524) निपु—इमं दाव चित्तपडं भट्टिणो अग्गदो णिक्खिवामि ।
(तथा करोति) (इमं तावच्चित्रपटं भर्तुरग्रतो निक्षिपामि)
(—)

(525) विदू—अविहा ! अविहा ! एसो पिण्डिअभोअमण्डलो वाअधिवहुकोढविसमो महाणाओ महाणाओ ।
(अविहा ! अविहा ! एष पिण्डितभोगमण्डलोवालधिबहुक्रोडविषमो महानागो महानागः )

(526) राजा—(निरूप्य) अयं स चित्रपटः; सखे गृह्यताम ।

(527) विदू—ही ! ही ! ण खु अअं महाणाओ, चित्तपडा, गेह्णेमि । (ही! ही! न खल्वयं महानागाः, चित्रपटः, गृह्णामि )

(528) राजा—कुतोऽस्य चित्रपटस्यावतारः ? लतागृहान्निर्गत्य जानीमः ।

(529) ( उभौ निर्गमं नाटयतः )

(530) निपु—जेदु भट्टा । (जयतु भर्ता)

(531) कीर्ति—जेदु अंअउत्तो । (जयत्वार्यपुत्रः)

(532) (उभौ प्रणमतः) (राजा कीर्तमतीमुत्थाप्य परिष्वंजते)

(533) राजा—को नामावामभ्युदयविशेषः । अथ वा सखे वैखानस—

(534) पश्यतोऽपि न विश्वासः सखेदस्य सखे मम ।
सङ्कल्पदृष्ट्या देव्या बहुशो वञ्चिता वयम् ।।२६।।

(535) विदू—किं एदं सच्चअं ण वेत्ति एसो संव्वंगीणो रोमंचो पुच्छिदव्वो । (किमेतत्सत्यं न वेति एष सर्वाङ्गीणो रोमाञ्चः प्रष्टव्यः)

(536) निपु—दिट्ठिआ पडिवण्णराअसद्दं भट्टिदारिआ भट्टारं पेक्खदि ।
(दिष्ट्या प्रतिपन्नराजशब्दं भर्तृदारिका भर्तारं प्रेक्षते).

(537) राजा(सहर्षम्) अयि निपुणिके—

(538) प्रायशः पृथिवीशानां भागैश्वर्यविडम्बना ।
कीर्तिमत्येव मे लक्ष्मीरिति गर्वस्मिता वयम् ॥३०॥

(539) (अपवार्य) सखे वैखानस, किमेतावद्यावदविदितमस्माभिः ।

(540) विदू—एदं मतंगुत्तो जाणादि । (एतन्मन्त्रगुप्तो जानाति).

(541) राजा—साधु मन्त्रगुप्त, साधु; सम्यगाराधितोऽस्मि ।
सखे वैखानस ।

(542) कविरिव नृपपर्वणो विभूतिं
बलमिव शूर्पकशासिनो वसन्तः ।
गुरुरिव शतयज्वनः प्रबोधं
किमु न करोति चिरन्तनः सखा मे ॥३१॥

(543) विदू—ही ही सामाअमाणदिअसपच्छिमजामो ओघट्टिअदिसामुहो मेहारोवो सगन्धवहो संतासइस्सदि, ता पविसह्म अब्भंतरं । ( ही ही श्यामायमानदिवसपश्चिमयामोऽवघट्टितदिशामुखो मेहारोपः सगन्धवहः सन्त्रासयिष्यति । तत्प्रविशामोऽभ्यन्तरम् ।

(544) स्त्री—(मेघस्तनितं निशम्य) अंअउत्त, परित्ताआहि।
(कम्पोत्तरं परिरभते) (—) (आर्यपुत्र परित्राहि (—)

(545) राजा—साधु भो श्रमपरितोषिताः स्मः। प्रिये, दृश्यतां
मधु (राज) घनसमयावतारः—

(546) कच्चैषा करभोरु काञ्चनमयी मिथ्या तु विद्युल्लता
आसच्छक्रशरासनच्छलवहः शृङ्गाररेखाविधिः।
वर्षोत्माकरशीकरव्यतिकरो गर्वोर्जितं गर्जितं
तैस्तैरम्बुदगोचरैः सुरराजो लिङ्गैः समुल्लिङ्गितः ॥२२॥

(547) अपि च—

(548) नृत्तारम्भप्रविततशिखश्चेष्टतां नीलकण्ठो
भृङ्गाघ्रातं सुरभिककुभः पुष्पमाविष्करोतु।
प्रत्यावृत्ताः पुनरभिमताः साधु सीमन्तिनीनां
गण्डाभोगव्यतिकरवतीं वेणिमुद्वेष्टयन्तु ॥२३॥

(549) ( निष्क्रान्ताः सर्वे )

(550) पञ्चमोऽङ्कः

(551) कौमुदीमहोत्सवः समाप्तः।

अरे ! चम्पकतरो, त्वं केनाऽस्मिन्कुग्रामे ग्राम निवासिनां मध्ये आरोपित इति अन्योक्तिः—

केनाऽत्र चम्पकतरो ! बत रोपितोऽसि
कुग्राम-पामर-जनान्तिक-वाटिकायाम् ?
यत्र प्रवृद्ध-वन-शाक-विवृद्धि-लोभाद्,
भो भग्नवाट-घटनोचित-पल्लवोऽसि ?

"विहारी" कवेः "फूल्यो अनफूल्यो भयो गंवई गांव गुलाब" इयमुक्तिः उपरिलिखित—कवितामनुकरोति ।

मुखवर्णने—

कोषः स्फीततरः स्थितानि परितः पत्राणि दुर्गं जलम्,
मैत्रं मण्डलमुज्वलं चिरमधो नीतास्तथा कण्टकाः ।
इत्याकृष्टशिलीमुखेन रचनां कृत्वा तदात्यद्भुतम्,

यत्पद्मेन जिगीषुणाऽपि न जितं मुग्धे ! त्वदीयं मुखम् ॥

न जाने केन हेतुना मम हृदयं खण्डशो नैव भवति—

गते प्रेमाबन्धे प्रणयबहुमाने विगलिते,
निवृत्ते सद्भावे प्रणयिनि जने गच्छति पुरः ।
तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि ! गतांस्तांश्च दिवसान्,
न जाने को हेतुर्दलति शतधा यन्न हृदयम् ॥

काचिद्विदग्धा कथयति-प्रियस्य संगमेऽपि प्रियस्य नर्म,

स्मितं, वचनं रसादिकं च यत्कथयसि, अतो धन्यासि इति व्यङ्गोक्तिः—

धन्यासि या कथयसि प्रियसंगमेऽपि,
विश्रब्ध-चाटुक-शतानि रतान्तरेषु।
नीवीं प्रति प्रणिहिते तु करे प्रियेण,
सख्यः शपामि यदि किञ्चिदपि स्मरामि।

असती-वर्णने—

दृष्टिं हे प्रतिवेशिनि! क्षणमिहाप्यस्मद्गृहे दापय-
प्रायेणाऽस्य शिशोः पिता न विरसाः कौपीरपः पास्यति
एकाकिन्यपि यामि तद्गृहमितः सन्त्रस्तमालाकुलं—
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः॥

शृङ्गारवर्णने—

नार्याः सा रतिशून्यता नयनयोर्या दृष्टिपाते स्थितः,
कामी प्राप्तरतार्थ एव न भवत्यालिङ्गितु वाञ्छति।
आश्लेषादपि या परं मृगयते धिक्कामयोग्यां स्त्रियं,
श्रोणीगोचरमागतो रतिफलं प्राप्नोति तिर्यङ् न किम्॥

सूर्योदयवर्णने----

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गाः
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु।

एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बि बिम्बम् ॥

वसन्तस्वभाववर्णने----

किंशुककलिकान्तर्गतमिन्दुकलास्पर्धि केषां भाति ।
रक्तनिचोलकपिहितं धनुरिव जतुमुद्रितं वितनोः ॥

सुरतवर्णने----

उन्नमय्य सकचग्रहमास्यं चुम्बति प्रियतमे हठवृत्त्या,
हुँ ममेति वदनान्तरलीनं जल्पितं जयति मानवतीनाम् ॥

समस्यापूर्तौ----

कवेरभिप्रायमशब्दगोचरं स्फुरन्तमार्द्रेषु पदेषु केवलम् ।
वदद्भिरङ्गैः कृतरोमविक्रियैर्जनस्य तूष्णीं भवतोऽयमञ्जलिः ॥

विज्जकायाः गर्वोक्तिरपि पठनीयेव

अहमस्मि सरस्वती ! तद् दण्डिना न जाने "सर्व-शुक्ला सरस्वती" इति कथं लिखितम् ।

नीलोत्पल-दल-श्यामां विज्जकां मामजानता ।
वृथैव दण्डिना प्रोक्तं "सर्व-शुक्ला सरस्वती ॥"

वस्तुतो गर्वोक्तिः समुचितैव प्रतिभाति---

---

# Appendix II

## Alphabetical List of Verses

| | Act | No. of verse |
|---|---|---|
| अन्थे मन्युमहाभुजङ्गमितरे | I | 20 |
| अस्या सखे क्षणमदृश्यत | I | 28 |
| अप्याजवञ्जवसुखान्यवधीरयन्ती | II | 1 |
| अचिन्तनीयं मनसापि | III | 1 |
| अलिकं रामशवलं | V | 1 |
| अथवानुगुणान तत्सुतां | V | 12 |
| अलंङ्कर्तुमलं मन्ये | V | 18 |
| आश्रयति माधवी चेद् | II | 2 |
| आकस्मिकीमरतिमुद्वहनीव | II | 11 |
| आशाकेशान्त धूपैरिव | IV | 10 |
| इदं किलाविकृतकान्ति विप्लवं | I | 23 |
| इति कृतमिति चोक्तं | IV | 16 |
| इच्छानुषङ्गकलुषाल्पधियां | IV | 4 |
| उन्निद्राशोकचूतप्रसव | III | 3 |
| उपकृतवतीमपि दशां | III | 4 |
| कर्णान्त विश्रान्त विलोचनश्री | I | 17 |
| कविरिव वृषपवर्णां विभूतिं | I | 31 |
| कण्ठे विषं विकटवेष | I | 3 |
| कक्षैषा करभोरु | I | 32 |
| कृष्णाशारां कटाक्षेण | I | 3 |

| | Act | No. of vers |
|---|---|---|
| कालापकर्षे सतिभङ्गुरत्वात् | IV | 11 |
| काञ्ची कलखोन्मिश्रं | I | 13 |
| कारा निरोधपरिपाण्डु कपोलरेखा | IV | 6 |
| कान्ता वियोगज्वलनाभिलप्ते | V | 23 |
| कुवलयदलदीर्घदृष्टिपाशां | II | 14 |
| कुर्वन्ति भृत्या वचनं प्रभूणां | IV | 5 |
| गताप्रिया प्रस्तुत चित्तरागै | I | 24 |
| गिरिमिव दूर्वेहरूपं | V | 15 |
| गुणविस्रव शङ्कया नीतिः | IV | 8 |
| गूढ प्रयगो निभृतापि | II | 16 |
| चेतस्त्वया सहितमेव | V | 28 |
| जयति प्रथमं विजया | IV | 19 |
| जातं विभ्रमदृष्टि पातशबलं | II | 5 |
| तपसेव विभक्त विग्रहं | I | 5 |
| तरुणारुण रश्मिय ताडितं | IV | 20 |
| तामेवानुगतं चेतो | I | 3 |
| त्यक्तोमानस्तरुण्या | IV | 9 |
| त्वक्तं तया कुपितवहिपरीनमन्त | IV | 15 |
| दर्पणगतमिव सवितुः पढान्नरचितं | II | 7 |
| दातारं करण प्रयोग निपुणां | V | 6 |
| दीर्घैर्दिगन्त विटपेषु | IV | 21 |
| दृष्टासन्ने मयि तु सहसा | V | 27 |

# KAUMUDI-MAHOTSAVA

## INTRODUCTION

### THE STORY

"Kaumudī-mahotsava" is the drama staged in the palace of the King of Magadha to celebrate the time-honoured autumnal Full-Moon Festival of Magadha as well as the accession to the throne of King Kalyāṇavarman to the throne of Magadha. It is composed of the past history of the life of Kalyāṇavarman.

Kalyāṇavarman was the only son of Sundaravarman, who was a popular sovereign of Magadha. Though he had more than one wife, he was not blessed with a son and heir to the throne. He therefore adopted a boy called Chaṇḍasena from a Kshatriya clan of Magadha. His intention was to make him his successor. But after some time, a son was born to Queen Madirāvati, the consort of Sundaravarman. The boy was named Kalyāṇaśree. Chaṇḍasena, seeing his future hope of becoming the King of Magadha destroyed, made an alliance with the Lichchavi kings, who were at this time enemies of Magadha and tried to usurp the throne by conquering Sundaravarman. The palace of Magadha was beseiged suddenly. Sundaravarman died fighting bravely in self-defence. The queens entered the fire and died with the King. The little Prince Kalyāṇaśree was carried away secretly in the darkness of night by the faithful ministers of Sundaravarman. Vinayandharā, the nurse of the Prince, followed them. But in the pitched darkness of the night, they lost each other in the forest. The Prince was picked up by the hermits of the *ashram* of Jābāli where he was brought up by the *rishi* with paternal care. Vinayandharā was broken-hearted; she took orders as a mendicant and assuming the name of Yogasiddhi, wandered from place to place. She reached Mathurā, where king Kīrtisena reigned. He had an only daughter named Kīrtimati. Rājanvati, consort of Kīrtisena, was pleased to place the little Princess under the guardianship of Vinayandharā or Yogasiddhi.

Years rolled on; Prince Kalyānaśree, under the fostering care of the *rishi* Jābāli, learnt all the arts befitting a king. In course of time he attained his majority. The faithful ministers of Sundaravarman were not idle. Chaṇḍasena proved a tyrant. He imprisoned all the principal citizens of Magadha. Popular opinion went against him. The ministers took advantage of this opportunity; they worked silently in the capital in disguise among the citizens and created a popular opinion to dethrone the king and recall the rightful heir. In those days people had the power of electing their own kings. This is known as the City-Council of Pāṭaliputra. To accomplish this, by the stratagem of Mantragupta, the frontier tribes were set in rebellion. Chaṇḍasena, as he had none to help him, had himself to leave the capital and go there to quell the rebellion. Finding the capital unguarded, the citizens welcomed Kalyāṇavarman into their midst and crowned him as king. Chaṇḍasena was killed in his clash with the Śavaras and his line thus came to an end.

As soon as Kalyāṇavarman attained majority, the trusted friends of Mantragupta were sent to the hermitage to fetch him. On their way they halted in the forest adjoining the temple of Chaṇḍikā near lake Pampā.

In Mathurā, Princess Kīrtimati attained marriageable age and King Kīrtisena was anxious for her marriage. He sent her with her retinue and nurse Yogasiddhi to the temple of Chaṇḍikā so that she could offer her oblations and obtained the blessings of the goddess. Kīrtimati came there walking all the way and after tendering her offerings was returning to her camp. She was tired by the heat of the sun and, searching for a shadowy place, came to the tree under which the Prince was sitting. She was attracted by the strikingly handsome appearance of this unknown youth. The two thus met and they fell in love at the first sight and departed after a short talk. The Princess in her bewilderment dropped her string of pearls.

The love-sick Princess was fading away. She could not express it to her companions, who became quite worried on account of her unknown malady. The Princess avoided her friends. One night when all were asleep, she got up and painted the portrait of the Prince with coloured chalks on a piece of canvas and with folded hands said "O beloved of my heart! Thou art cruel". Nipuṇika, her confidante, was awake at this time and saw this.

In the morning the picture was snatched away by an eagle who thought it to be a peace of meat and dropped it in another part of the woodland where Yogasiddhi was sitting in a meditative mood. Seeing something falling from the sky she picked it up and on close observation identified it with the picture of Prince Kalyāṇaśree and fainted.

The maids of the Princess rushed for relief and on her regaining her consciousness asked how this picture came. Nipuṇikā related the story. Yogasiddhi said that the picture was of the Prince of Magadha.

The Jester who was seeing all this from behind identified her as Vinayandharā and came forward and gave the greetings of Prince Kalyāṇaśree. He was in fact sent thither by the Prince to return the string of pearls. Vaikhānasa, the Jester of the Prince, gives it to Nipuṇikā and receives the portrait of the Prince under which Yogasiddhi writes a couplet wishing for the union of Kirtimati with Kalyāṇaśree.

Kalyāṇaśree was happy to see the portrait and paints the picture of the Princess by the side of his picture. This was returned to Yogasiddhi.

Kirtimati returns to Mathura. Yogasiddhi sees Kirtisena and gives this picture telling the king that it was so ordained by Ekānangā, the family goddess of the house of Mathurā.

Kirtisena was pleased and by this time Kalyāṇaśree was crowned as the King of Magadha. Kīrtisena now sends their family priest with his daughter and gifts. With the celebration of the marriage at Magadha, the drama comes to a close.

## MANUSCRIPT MATERIAL AND TITLE OF THE DRAMA

The manuscript of this drama originally belonged to British Malabar from where it was taken on loan by G. O. Mss Library of Madras. A copy of it was taken and the original was returned to the owner. All efforts to find a second copy of the work proved fruitless. The original copy is on the palm-leaf of Śrītāla kind and the copying may not be older than 150 years. It is found along with another drama-*Abhirāma-Chitralekham*-probably a work of the 13th century. The superscript on the covering leaf mentions only the later work. A copy of *Abhirāma-Chitralekham* is found in G. O. Mss Library of Madras but without the present drama. Our drama does not bear any heading. Neither the prologue nor the colophone at the end indicates the name of the drama or its author. The scribe at the close of the play wrote *Kaumudī-Mahotsava Samāptah* without any apparent connection with the rest of the work. From this it was conjectured that the drama might have been known by that name and was published in 1929 under the joint editorship of Mr. Rāmakrishṇa Kavi and Paṇḍit S. K. Rāmnath Shāstri giving it the present name.

It was perhaps customary in Malabar not to give any name to a work. All the dramas describing Udayana's heroism including Ratnāvalī, Priyadarśikā etc., are found under one heading viz. *Vatsarāja charitam*. Bhāsa's dramas are found in different names: Karṇābhara is known as Kavacha-tana and Kuṇḍalāharana, Urūbhaṇga as Gadāyudha, Abhishekha as Ramābhishekha, Pratimā as Pratimārāma and Pratimādaśaratha. Hence we can imagine that the present drama was placed along with Abhirāma-chitralekhaṃ' without any seperate name.

The question naturally arises in one's mind, why this drama is called *Kaumudīmahotsava* when the title, as it is, is not suggestive of the plot or of the life-history of its hero *Kalyāṇavarman*. The only

favourable factor available from the body of the drama is that it was staged at the time of the annual Full-moon Festival at Pataliputra in the palace of *Sugāṅga* which synchronises with the accession of Prince Kalyāṇavarman to the throne of Magadha, when his marriage with the Princess of Suraśena took place. But as has been observed above, the palm-leaf manuscript of the drama does not give us any indication as to the title of the piece, nor have we a colophone at the end, as is usual in many works of this type, mentioning the name of the work. The singular factor that supports this title of the drama is the last line, which, was probably added by the scribe without any consideration to the text of the drama. The words of the Stage-manager "now again is approaching the Kaumudimahotsava" points only to the annual festival of Autumnal Full-moon that used to take place at Magadha. This was a time-honoured Festival held every year at Magadha. We find it mentioned in Mudrārākshasa Act 11 where king Chandra Gupta says "I wish to enjoy a sight of Kuśumapura, now the more delightful on account of the commencement of Kaumudī-Mahotsava."

If the drama is to be called by the name of the festival of Full-moon, then it seems as though the celebration of the festival alone is of supreme importance. The author does not give us any clue as to suppose that the festival, which formed only an occasion to stage the work, was top-most in the writer's mind. Was there anything else that was uppermost in the mind of the author ?

A close study of the work reveals that either the life-history of the hero or the machanism by which Mantragupta succeeded in establishing Kalyāṇavarman on the throne of Magadha, without any bloodshed, forms the centre and was top-most in the mind of the author. In the prologue, the stage-manager, while discussing what drama should be staged, speaks of the present drama written as embodying the past life-history of this king (Asyarājñyaḥ Samatītam Charitamadhīkṛtya nibaddhaṃ nātakaṃ). So the life-

History of the king forms the centre of interest, though such a name was not given to it. It was this past history of the king that was staged to celebrate his accession to the throne on the Full-moon Festival day, which was a time-honoured festival of Magadha. So the scribe should have ended by saying 'Iti Kalyāṇacharitaṃ samāptam' instead of 'Iti Kaumudīmahotsavah.' Though *Kalyāṇa-charitaṃ* or *Kalyāṇa-Kīrtimatīyaṁ* would have been more consistent with the subject matter of the drama, yet as it has already come to be known in the literary world under its present name, we have to be contented with the present designation given to the drama.

The publication of this work ushered in the criticism of many scholars in the East and the West. The late Dr. K. P. Jayaswal went so far as to modify the pages of his history based on the historical evidence available in this work. His view however, was refuted by Dr. Winternitz, and later a third scholar[1] came forward to show, with all the vehemence of argument, that there is no historical data in Kaumudī-mahotsava.

The entire question hinges on the identification of Chaṇḍasena of this drama with Chandragupta I of the Mauryan dynasty. The late Dr. Jayaswal, based on the assumption that *Chandra* is the Prakrit form of Chaṇḍa tried to identify him with the historical figure Chandragupta, the founder of Gupta dynasty and asserts with confidence that "this Chaṇḍasena was no other than the king who assumed the name of Chandragupta after his grandfather's name Gupta and adds that Chandragupta was his regnal name and chaṇḍa-sena was the original name and that it seemed that Chandra dropped Sena and adopted 'Gupta' to give himself a dynastic title.[2] In support of this change in the name he refers to the case of Vasanta-sena and Vasantadeva which were the names of the same king and that of Dahrasena, who, on his coins adopts the style of *Dahragaṇa*.[3] In support of this another scholar[4] refers to the inscriptions of *Chaṇḍasāti*, the Śātavāhana king,[4a] coins of Śrī.

Chandrasāti and to Khemendra's *Bṛhatkathāmañjarī.*[4b]

In the first place, among these, the Inscription of *Caṇḍasāti* does not support Prof. Sharma, because the careful scholar H. Krishna Śāstri gives the Sanskrit form of Caṁdasāti as *caṇḍasvāti* and remarks that 'on a second coin figured in G. P. I. in pl. VI of the coins of the Andhra Dynasty by Rapson the reading is *Chaṁda-sāt(a)si* with an anusvāra marked to the left of c as in the *Koḍavali* rock inscription". As a matter of fact we have coins not only of *caḍasāti* but also of *cadasāti. Caḍasāti* is obviously *chaṇḍasvāti* and *cadasvạti* is *chandrasvāti.* It is not therefore, intelligible how *chaṁda* can become *chaṇḍa* in Prakrit as the late Dr. Jayaswal and Prof. Sharma seem to think.

However that may be, the above evidence does not help us in solving the problem, as in the text of *Kaumudīmahotsava* the name appears in the Sanskrit text as '*Chaṇḍa*' and not as '*Chandra*'. The opening verse of Act IV of this drama which refers to the hero both in the Prakrit and Sanskrit texts has *chaṇḍabba* transliterated into sanskrit as 'Chandra=iva'. And later on wherever the hero is mentioned, his name appears as 'Chaṇḍasena' in Sanskrit. So it is difficult to show that '*Chaṇḍa*' of this drama is equivalent to '*Chandra*'.

The Gupta Inscriptions describe Samudra Gupta as the son of the Mahārājādhirāja, the glorious Chandra Gupta I and the daughter's son of Lichchavi, begotten on the Mahâdevī Kumāradevī from which it was presumed that Chandra Gupta I made an alliance with the Lichchavis through marriage. But our present drama describes *Chaṇḍasena* as being adopted by Sundaravarman as a poisonous tree owing to his inability to know his nature and is described as coming from a low caste—viz Kāraskaras. He is also described as being treacherous to his father and of having formed an alliance (Sambandhaṁ) with the Lichchavis who were termed as Mlechchas by the dramatist. But it is not known whether the alliance was through marriage or through some other source. It is clear from the words of Vardhamānaka 'Whence

is royalty to one of such a caste?' that Kāraskaras were regarded as a very low caste people unfit to be kings and the Dharmaśāstras describe them as a low community to whom the Brāhmanas should not go and on return from whom they should perform a ceremony of purification.[5] If such was the social status of the Kāraskaras, it is difficult to see how Sundaravarman could adopt him according to the laws of Dharmśāstras as his son with a view to install him as his heir apparent. Neither the Gupta Inscriptions nor the pages of Indian History have anything to show that Chandra Gupta I was an adopted son and also came from a low family. The inscriptions describe him as the son of Mahārājā Ghatotkacha. The name of Sundaravarman does not come in this context. If the above line of reasoning has any force, it is not possible to identify Chandra Gupta I, the founder of the Gupta dynasty, with Chaṇḍa-sena of the present drama.

## AUTHOR

Who was the author of this work? It is here that conjecture has its full play. In the prologue the letters containing the name of the poet are worm-eaten and the space can be filled in by two letters only. The letters following this gap are *Kayā-nibaddhaṁ* which indicate that the author was not a man, and that the name consisted of three letters only. Mr. Rāmakrishṇa Kavi endorses that a close examination of the worm-eaten portion of the leaf revealed that the letter was *ja*. Hence the name suggested was, Vijjaka, or Vijjika. His mind was, however, shadowed with some doubt because in the following verse occurs:[5a]

Jayati Prathamām Vijayā Jayanti Devāḥ Svayaṁ Mahādeva,
Śrimantau bhagavantam-Ananta-Nārāyaṇau Jayataḥ.

He argues that *Vijja* is the Prakrit form of *Vidya* and has no philological relation with Vijayā. The word

Anantanārāyaṇau, in the above, the chief deity of Trivandrum may either indicate the name of the poet or it may be that some princess named Vijayā was the devotee of the god Anantanārāyaṇa of Trivandrum. This need not cast at all any reasonable doubt upon the name of the author. Amongst the deities mentioned in this verse the last two are Ananta-Nārāyaṇau, which is in the dual, and not Ananta-Nārāyaṇaḥ, the name of the chief deity of Trivandrum.

This verse again begins with *Vijayā*, which is very significant. Immediately after Sūtradhāra sings his song in praise of Krittivāsas (Māhādeva), we are told when the drama was to be acted, the autumn season had approached—the autumnal season which is a great festival common to all people. Vijayā fits excellently with this great festivity of autumn (Śarat-Samaya). As a matter of fact, in north India, especially in the eastern parts of it, the festivities of Vijayādaśamī are too well-known to require any mention. This shows that the mind of the author was far removed from the site of Anantanārāyaṇa, god of Trivandrum.

We may thus take it that the author of the drama is Vijjakā and she flourished in the eastern part of India, if she was not actually a native of Bengal. The name Vijjakā at once reminds us of the verse which is attributed to her at least in the *Sārangadhara-Paddhati*[6] which runs as follows:—

> Nil-otpala-dala-śyāmām—Vijjakām mām=ajānatā
> Vṛth=aiva Daṇḍinā proktaṁ sarva-śuklā Sarasvatī.

Evidently in this stanza Vijjakā describes herself as 'dark like the petals of a blue lotus'. Nevertheless she is bold enough to style herself as Sarasvatī and find fault with the poet Daṇḍin because he has described the goddess Sarasvatī '*Sarvaśuklā!*. This gives rise to two inferences: the first is that she was contemporary of Daṇḍin and was possibly known to him through her writings. The second inference is that she must have composed a number of works

which attracted the attention and admiration of hei contemporaries. Now Daṇḍin begins his Kāvyādarśa with the following verse:—

Chaturmukha - mukh = āhbhoja - vana - haṁsa-
vadhūr=mama.
Mānase ramatām dīrghaṁ sarva-śuklā Sarasvatī

This poem of Daṇḍin must, therefore, have been known to vijjakā. On the other hand, as she chides the poet for describing Sarasvatī as *Sarva-súklā*, there can be no doubt that she was his contemporary. How else could she scold Daṇḍin that he knew about her rather dark complexion and yet styled *Sarasvatī* as 'all-fair'. That she was a *Sarasvatī* is proved by the number of verses which are ascribed to her in the various anthologies and which are as many as 29. Unfortunately not one of them is traceable in the *Kaumudīmahotsava*. This need not run counter to the view propounded above. The case is not unlike Bhāsa. Multifarious verses have been attributed to this poet in the anthologies, but hardly any one has been found in his works so far published.

## IDENTIFICATION OF VIJJAKĀ

Assuming Vijjakā to be the author of the drama, we have now to find out to what part of the country and to which class she belonged. Both the internal and external evidence found on these points is meagre. We have seen above, how a poetess called Vijjakā assumed the sobriquet Sarasvatī and rebuked Daṇḍin for ignoring her. She has been called a Karṇātī in the following verse of Rājaśekhara, which is also found in Sūkti-muktāvaḷī, Subhāshita-hārāvali and Śāraṅgadhara-paddhati. It runs as follows:—

Sarasvatī=va Karṇātī Vijayāṅka jayaty=asāu |
yāVaidarbha-giräṁ vāsaḥ Kālīdāsạd = anan-
tàram ||

In these lines the learned woman who was like Sarasvatī is said to belong to Karṇāta and is describ-

